॥ श्रीः ॥

# १ वैज्ञानिकोपाख्यानम् ।
# २ वैदिकोपाख्यानम् ।

60



समीक्षाचक्रवर्तिनः—

स्व० पं० श्री मधुसूदनशर्ममैथिलाः ।

॥ श्रीः ॥

# * वैज्ञानिकोपाख्यानं वैदिकोपाख्यानञ्च *

समीक्षाचक्रवर्ति–विद्यावाचस्पति–महामहोपदेशक–विद्वद्वर्य

**स्व० पं० श्री मधुसूदन ओझा**

विरचितम्

तदिदं द्वयम्

**श्री सुरजनदास स्वामिना एम. ए.**

साहित्य, व्याकरण, वेदान्त, सांख्ययोगाचार्येता

संपादितम्।

ग्रन्थकर्तृसूनुना पं० श्री प्रद्युम्नशर्म्मणा

प्रकाशितम्।

प्रथमावृत्तिः } वि. सं. २००७ { मूल्यम् १।)

सर्वेऽधिकाराः प्रकाशकाधीनाः।

# * वैज्ञानिकोपाख्यानम् *

विद्यावाचस्पतिश्रीमन्मधुसूदनशर्म्मणा ।
आख्यानकं पुराणेतिहासयोः प्रसमीक्ष्यते ॥१॥

## ॥ सौपर्णोपाख्यानम् ॥

### ॥ पुराणमिदं नेतिहासः ॥

पुरा देवयुगे दक्षस्य प्रजापतेः कन्ये कश्यपस्य प्रजापतेर्भार्य्ये द्वे भगिन्यावास्तां-कद्रूश्च विनताचेति । अथ केनाचिन्निमित्तेन सुप्रीतः कश्यपस्ताभ्यां वरं दातुं प्रववृते । तत्र तावत् कद्रूः सहस्रं मे नागाः सुता जायेरन्निति वरं वव्रे । विनता पुनः तेजसा च वपुषा च विक्रमेण च कद्रूपुत्रेभ्यो बलाधिकौ द्वावेव पुत्रौ वर वव्रे । पतिस्तु भगवान् कश्यपस्तस्यै तस्यै च यथेच्छ-मेवमस्त्विति होवाच । गर्भौ तु युवाभ्यां यत्नतो धार्य्यावित्यादिश्य कश्यपो वनमाविशत् ।

अथ महता कालेन कद्रूरण्डानां दशतीर्दश जनयामास । विनता पुनर्द्वे अण्डे । तयोश्च परिचारिकाः प्रहृष्टाः सोपस्वेदेषु भाण्डेषु पञ्चवर्षशतानि यावदण्डानि निदधुः । ततः पञ्चशते काले कद्रूपुत्राः सर्वे विनिःसृताः । विनतायास्त्वण्डाभ्यां मिथुनं न व्यदृश्यत । ततः सपत्नी पुत्रोत्पत्तिं दृष्ट्वा व्रीडिता सती सा विनता पुत्रार्थिनी तयोरेकमण्डं बिभेद, तत्र च पुत्रं पूर्वार्द्ध-कायसंपन्नमितरेणाङ्गेनाप्राकाशता युक्तं ददर्श । सोऽण्डभेदनात् क्रोधसंरब्धः पुत्रस्तामेनां शशाप ।

योऽहमेवं कृतो मातस्त्वया लोभपरीतया ॥
शरीरेणासमग्रेण, तस्माद्दासी भविष्यसि ॥ १ ॥
पञ्चवर्षशतान्यस्या, यया विस्पर्द्धसे सह ॥
एष च त्वां सुतो मातर्दासीत्वान्मोचयिष्यति ॥ २ ॥
यद्येनमपि मातस्त्वं, मामिवाण्डविभेदनात् ॥
न करिष्यस्यनङ्गं वा, व्यङ्गं वापि यशस्विनम् ॥ ३ ॥
प्रतिपालयितव्यस्ते जन्मकालोऽस्य धीरया ॥
विशिष्टं बलमीप्सन्त्या, पञ्चवर्षशतात्परः ॥ ४ ॥

एवमयं पुत्रो मातरं विनता शप्त्वाऽन्तरिक्षगः प्रभातसमये सदाऽरुणो दृश्यते । सारथ्यं च प्रकल्प्यासावादित्यरथमध्यास्ते । अथान्यः पन्नगभोजनः पुत्रो गरुडो नाम यथाकालं जज्ञे । स जातमात्रः क्षुधितो यथाविहितं स्वं भोजनमादास्यन् विनतां परित्यज्य खमाविशत् ।

अथैतस्मिन्नन्तरे ते भगिन्यावन्तिकादायान्तमुच्चैःश्रवस नाम दिव्यमश्वमपश्यताम् तत्र कद्रूर्विनतामब्रवीत् । 'भद्रे ! अयमुच्चैःश्रवाः किंवर्णः, शीघ्रं प्रब्रूहि' । विनतोवाच । 'श्वेत एवायमश्वराज इति मन्ये । त्वमपि ब्रूहि । यथावर्णं त्वं मन्यसे' । कद्रुरुवाच । अहमेनं कृष्णवालं मन्ये । एहि विपणावहे । अत्र दासीभावाय मया सार्धं दीव्य' । तदित्थं दासीभावाय मिथः समयं कृत्वा 'श्वः पुनर्द्रक्ष्याव' इति नियम्य यथेच्छमाजग्मतुः स्वंस्वं निकेतनम् ॥

अथ कद्रूर्जिह्मं चिकीर्षती स्वं पुत्रसहस्रमाज्ञापयामास 'पुत्राः ! यूयमितोऽञ्जनप्रभा बाला भूत्वा क्षिप्रमेवोच्चैःश्रवसमश्वमाविशध्वम् । यथाऽहं दासी न स्याम्' । एवमुक्ता अपि ये केचन सर्पा इदं वाक्यं नावपद्यन्त, तानेषा कद्रूः शशाप । 'ये यूयं ममाज्ञां न स्वीकरिष्यथ, तान् सर्वानेव युष्मान् पाण्डवेयस्य जनमेजयस्य राज्ञो वर्त्तमाने सर्पसत्रे पावकः प्रधक्ष्यतीति । इत्थं दैवादतीव दारुणं कद्र्वा समुत्सृष्टं तमेनं शापं ब्रह्मा शुश्राव । देवानश्रावयच्च । तत्र प्रशंस्य कद्रूमनुमोद्य च ता वाचं देवान् प्रत्युवाच ।

तिग्मवीर्य्यविषा ह्येते दन्दशूका महाबलाः ।
अन्येषामिह सत्वानां नित्यं दोषपरा इमे ॥ १ ॥
विषोल्वणा महाभोगाः प्रजाता बहुविग्रहा ।
तेषां तीक्ष्णविषत्वाद्धि प्रजानामहितं बहु ॥ २ ॥
युक्तं मात्रा कृतं तेषां परपीडोपसर्पिणाम् ।
इत्थं प्राणान्तिको दण्डो दैवेन विनिपात्यते ॥ ३ ॥

एवं संभाष्य कश्यपं चाहूय प्रोवाच । 'य एते दन्दशूकाः सर्पास्त्वयोत्पादितास्त इदानीं मात्रा परिशप्ताः । तत्र त्वया मन्युर्न कर्तव्यः । एतद्धि यज्ञे सर्पविनाशनं पुराणे दृष्टं खलु । इत्थमाभाष्य प्रसाद्य च तस्मै कश्यपाय विषहरीं विद्यां प्रादात् ।

नागाः पुनरित्थं सुदारुणं मातुर्वचः श्रुत्वा भीताः संविदं चक्रुः "इयं तावदसंप्राप्तमनोरथा सती निःस्नेहा माता दहेदस्मान् । प्रसन्ना पुनरस्मात्सुदारुणाच्छापादपि नूनं मोचयेत् । तस्मादवश्यं तद्वचः पालयिष्यामः, तुरगस्था वयं पुच्छं कृष्णं करिष्यामः" इत्थं बहवः संविदं कृत्वा सत्वरमागत्योच्चैःश्रवसः पुच्छे बाला बभूवुः । स ततः कृष्णवाल इवासीत् ।

ततो व्युष्टायां रजन्यां रवौ चाभ्युदिते सत्यमर्षिते दास्यार्थं कृतपणे सुसंरब्धे च ते भगिन्यौ तं तुरगमुच्चैःश्रवसमन्तिकाद् द्रष्टुमुपजग्मतुः । तत्र ते तावन्महान्तमुदकागाधं वायुना क्षोभ्यमाणममृताकरमचिन्त्यमप्रमेयं च दिव्यं समुद्रं ददृशाते । यो ह्यध्यात्म योगनिद्रामासेवमानस्य भगवतः पद्मनाभस्य युगादिकाले शयनीयस्थानमासीत् । यश्च गां विन्दता भगवता गोविन्देन वराहरूपिणाऽन्तर्विक्षोभितजलाविलोऽभवत् । यो वा ब्रह्मर्षिणा पूर्वमत्रिणा वर्षाणां शतं व्रतवताऽप्यनासादितं गाधो नाम । तं पाञ्चजन्यजननं चन्द्रवृद्धि क्षयवशादुद्धृतोर्मिमालासमाकुलमनन्तं दिव्यमक्षोभ्यं महार्णवमालोकयन्त्यौ ते दाक्षायण्यौ विहायसा द्रुतमभिजग्मतुः परं पारं समुद्रस्य तस्य । अतिक्रम्य च तं समुद्रं विनयता सह सा कद्रूः शीघ्रगा सती नचिरादिव तुरगाभ्यासे न्यपतत् । ददृशाते च ते तत्र शशाङ्ककिरणप्रख्यं कालवालं तदा तुरगम् । पुच्छे च कृष्णान् वालानालोक्य विनता विषण्णवदनाऽभूत् । अथ कद्रूस्तदा तां न्ययोजयद्दास्ये । ततः पणितेन पराजिता सा विनता दासीभावमागत्याति दुःखसंतप्ताऽभवत् ।

एतस्मिन्नन्तरे प्राप्तकालः स गरुडस्तदण्डं द्विखण्डं कृत्वा समजायत । स तदा काम रूप कामगमः कामवीर्यः सहसा प्रवृद्धो महासत्वबलोपेतः आसीत् । स तदा नभोगतो महा कायः पक्षिराजोऽतिसमिद्धोऽग्निराशिरिवाद्भुतसमानः सर्वाश्च दिशा विद्योतयन्नतिभयङ्कर इवादृश्यत । तं दृष्ट्वा सर्वे देवा अग्निं शरणमागम्य भयादिव तदानीमिदमब्रुवन् ॥

अग्ने ! मा त्वं प्रवर्द्धिष्ठाः काचन्नो न दिधक्षसि ।<br>असौ हि राशिः सुमहान् समिद्धस्तव सर्पति ॥ १ ॥

अग्निरुवाच । नैतदेवं यथा यूयं मन्यध्वे । गरुडस्त्वेष महाबलिष्ठः पक्षिराजो विनता पुत्रः । तेजसा चायं मम तुल्यः । तेनेमं तेजोराशिमिव दृष्ट्वा युष्मान् मोहः समाविशत् । अयं हि काश्यपेयो नागक्षयकरो देवः । स हि ते देवानामहिते चासुररक्षसां नित्यमायुक्तः ।

ततो न भयं कर्त्तव्यं, पश्यध्वन्तु मया सार्द्धं विक्रमं तस्य। एवमुक्ताः सर्षिगणा देवा दूरादभ्युपत्यैनमस्तुवन्। अत्युग्रमग्निसंनिभं वपुर्निग्रहीतुमभ्यार्थयंश्च ॥

न मे सर्वाणि भूतानि विभीयुर्देहदर्शनात् ॥
भीमरूपात् समुद्विग्नास्तस्मात्तेजस्तु संहर ॥ १ ॥

इत्येवं विमृश्यैव ततः स भगवानात्मनस्तेजःप्रतिसहारं चक्रे ॥

अथ कामगमः स विहङ्गमस्तमरुणमात्मनः पृष्ठमारोप्य तरसा पितुर्गृहात् समुद्रस्य परे पारे मातुरन्तिकमभ्यागच्छत्। ततोऽरुणः पूर्वां दिशं निक्षिप्तः, सूर्य्यसारथ्ये नियुक्तः सोऽस्य पुरस्तिष्ठति तेजश्चास्य हरति येन लोकानामृषीणां देवानां च सर्वतः स्वस्ति स्यात्। अन्यथैष सूर्य्यः सहसोद्यन्तुमुद्यतो लोकविनाशाय प्रभवेत्। दृश्यमान एवैतान् लोकान् स भस्मराशी कुर्य्यात्। स ततोऽरुणेन समावृत एवैष सवितोदेति ॥

अथ कदाचिद्विनतामाहूय कद्रूराज्ञापयत्। 'भद्रे ! समुद्रकुक्षावेकान्ते नागानामालयो वर्त्तते, तत्राहं गन्तुमिच्छामि, सा त्वमितो मां तत्र नयेति' ततो विनता कद्रूमवहत्। मात्राज्ञप्तश्च गरुड़ः सुपर्णः पन्नगानवहत्। स वैनतेयः सूर्य्यमभितो याति। ततः सूर्य्यरश्मिप्रतप्ताः पन्नगा मूर्च्छिता अभवन्। तदवस्थान् सुतान् दृष्ट्वा कद्रूरिन्द्रमस्तौत् ॥

नमस्ते भगवन्निन्द्र ! त्वमद्य शरणं मम।
त्वमेव परमं त्राणमस्माकममरोत्तम ॥ १ ॥
ईशो ह्यसि पयः स्रष्टुं त्वमनल्पं पुरन्दर।
सर्पाणां सूर्य्यतप्तानां वारिणा त्वं प्लवो भव ॥ २ ॥

इत्थं स्तुतो हरिवाहनो नीलजीमूतसंघातैः सर्वमम्बरमावृणोत्। निरन्तरासारं च वर्षद्भिस्तैर्मेघैरम्बरं नष्टचन्द्रार्ककिरणं समपद्यत। वर्षति च वासवे तदा नागानामतुलो हर्षोऽभूत्। मही च समन्ततः सलिलेनापूर्य्यत। ततो मात्रा सह भुजङ्गमा रामणीयकमागच्छन्। इत्थं विखेदाः संप्रहृष्टास्ते नागाः सुपर्णेनोह्यमानास्तमभीष्टं द्वीपं विश्वकर्म्मणा समुद्रे विहितमाजग्मुः। तत्र च मनःसंहर्षणं मनोज्ञाकृतिदर्शनं विलक्षणमरण्यमासाद्य सुप्रहृष्टाः सर्वे पन्नगा यथेच्छमितस्ततो विजह्रुः।

॥ इति काद्रवेयवैनतेयावतरणं नाम प्रथमः प्रस्तावः ॥

———

अथ काले सर्पाः सुपर्णमब्रुवन् । 'अयि खेचर ! त्वं हि विहायसा संचरन् बहूनिह रम्यान् देशान् पश्यसि । स त्वमस्मानपरं कञ्चन सुरम्यं विमलोदकं द्वीपं नय, एतच्छ्रुत्वा सुपर्णो विचिन्त्य मातरं विनतां प्रत्यब्रवीत् । मातः ! किं कारणं, मया सर्वं सर्पभाषितं कर्तव्यमेवेति' । विनतोवाच । 'पुत्र ! सुपर्ण ! सर्पैरुपधिना कृतं वितथं पणमास्थाय दुर्योगादस्याः सपत्न्या दासीभूतास्मि इति । इत्थं मात्रा कथितं कारणमाकर्ण्य तेन दुःखेन दुखितः सुपर्णः सर्पान् प्रत्युवाच । हे लेलिहाः ! किमाहृत्य किं विदित्वा किंवा पौरुषं कृत्वा दास्यादस्मा द् विप्रमुच्येयम् । तन्मे तथ्यं वदत' ॥ अथ सर्पास्तमब्रुवन् । ''अयि खेचर ! ओजसाऽमृतमाहर । ततो दास्याद्विप्रमोक्षस्ते भविष्यति ।''

इत्थं सर्पोक्तमुपायमाकलय्य गरुडः सुपर्णो मातरमब्रवीत् । अहममृतमाहर्तुं गमिष्यामि, ततो भक्ष्यं वेदितुमिच्छामि-इति । विनतोवाच । अस्ति समुद्रकुक्षावेकान्ते निषादालयः । तत्र बहूनि निषादानां सहस्राणि पशुप्रायाणि वृथाजीवनानि भवन्ति । तांस्त्वं भुक्त्वा यथेच्छमानय स्वर्गादमृतम् । किन्तु सावधानो भव । न त्वया ब्राह्मणं हन्तुं क्वचिदपि कार्य्या बुद्धिः । स हि सर्वभूताना ज्ञानदाता गुरुरित्यतो नित्यमवध्यो भक्तिनेयश्च । स तात ! संक्रुद्धेनापि त्वया नैव हन्तव्यः । ब्राह्मणानामभिद्रोहः कल्याणाय न भवति । स हि भूमिष्ठो देवो यथेच्छं शक्नोति योजयितुं प्रकोपितोऽनिष्टेन प्रसादितस्त्वभ्युदयेन । तस्माद्विनयेन तानुपगच्छेति ॥ सुपर्ण उवाच । कथं वा समानशरीराकृतिमत्सु मनुष्येषु मया ब्राह्मणोऽयमिति विज्ञातुं शक्यते । कानि वा ब्राह्मणानामभिज्ञानायोपयुक्तानि लिङ्गानि । किंरूपो ब्राह्मणो भवति । किंशीलः किंपराक्रमश्च । किंस्विदयमग्निनिभो भाति, किंस्विद्वा सौम्यप्रदर्शनो भवति, तन्मे पृच्छतः कारणतो ब्रूहि, यथाहमभिजानीयामेतानि लक्षणानि दृश्यन्ते ततो ब्राह्मणोऽयमिति ।

विनतोवाच—

किमन्यैर्लक्षणैस्तात ! बहुभिर्गूढवेदिभिः ॥
यस्ते कण्ठमनुप्राप्तो निगीर्णं वडिशं यथा ॥ १ ॥
दहेदङ्गारवत् पुत्र ! तं विद्याद् ब्राह्मणर्षभम् ॥
जठरे च न यो जीर्य्येत् तं विद्याद्ब्राह्मणर्षभम् ॥ ६ ॥

एवमाभाष्य सुपर्णस्यातुलं वीर्य्यं जानन्त्यपि सा विनता पुरा नागैर्विप्रकृतेत्यनृतेन खलप्रयुक्तेनानिष्टं संभावयन्ती भूयसाऽऽशीर्वादपरायणा पुत्रहार्दादिदं वचः प्रोवाच ।

पक्षौ ते मारुतः पातु चन्द्रसूर्यौ च पृष्ठतः ।
शिरश्च पातु वह्निस्ते वसवः सर्वतस्तनुम् ।
अहं च ते सदा पुत्र ! शान्तिस्वस्तिपरायणा ।
इहासीना भविष्यामि स्वस्तिकारे रता सदा ।
अस्तु ते स्वस्ति, पन्थानमरिष्टं व्रज सिद्धये ॥

इत्थं स मातुर्वचनं निशम्य वितत्य पक्षौ नभ उत्पपात ।
स तान् निषादान् बलवान् परीत्य बुभुक्षितः काल इवान्तकोऽगात् ॥ १ ॥
स तत्र चक्रे महदाननं तदा निषादमार्गं प्रतिरुध्य पक्षिराट् ।
ततो निषादास्त्वरिता प्रवव्रजुर्यतो मुखं तस्य भुजङ्गभोजिनः ॥ २ ॥
तदाननं विवृतमतिप्रमाणवत् समभ्ययुर्गगनमिवार्दिताः खगाः ।
सहस्रशः पवनरजोविमोहिताः यथानिलप्रचलितपादपे वने ॥ ३ ॥
ततःखगो वदनममित्रतापनः समाहरत् परिचपलो महाबलः ।
निषूदयन् बहुविधमत्स्यजीविनो बुभुक्षितो गगनचरेश्वरस्तदा ॥ ४ ॥
ययौ निषादानुपसंहरंस्ततो रजः समुद्धूय नभःस्पृशं महत् ।
समुद्रकुक्षौ च विशोषयन् पयः समीपजान् भूधरजान् विचालयन् ॥ ५ ॥

निषादानाहरन् सुपर्णो दैवान्निषादीसहचरमेकं ब्राह्मणमप्यभक्षयत् । स कण्ठे दीप्ताङ्गार इव दहन् प्रत्यपद्यत । ततो ब्राह्मणमभिज्ञाय सुपर्ण उवाच । अहो ब्राह्मण ! तूर्णमस्मादपावृतादास्याद् बहिर्विनिर्गच्छ, मात्राऽऽज्ञप्तोऽहम्, न मया ब्राह्मणो वध्यः अपि स पापे निरतः स्यात्' । एवं ब्रुवन्तं ब्राह्मणः प्रत्यभाषत । अपि मे भार्य्येयं निषादी मया सहैव निर्गच्छतु" । सुपर्ण उवाच । अस्त्वेवम् । एतामपि निषादीं परिगृह्याशु निष्पत । संभावय तूर्णमात्मानं, यावन्मे तेजसा त्वं जीर्णो न भवसि' । इत्थमुक्तो ब्राह्मणः सत्वरमनया निषाद्या सहितो मुखादस्य विनिष्क्रान्तः । सुपर्णं च वर्द्धयित्वा स्वेष्टं देशं जगाम । सुपर्णस्तु ततः पक्षौ वितत्याकाशमुत्पपात ।

अथासौ दिवमुत्पतन् स्वं पितरमपश्यत् । पित्रा पृष्टः स यथान्यायमुत्पतनहेतुं सर्वमाचष्ट । अथ कश्यपः पप्रच्छ । अयि पुत्र ! कच्चित् ते कुशलं वर्तते । भोजने तु ते न्यूनता नास्ति । कच्चिच्च ते मानुषे लोके यथेष्टमन्नं बहु लभ्यते । गरुड उवाच "भगवन् ! अस्ति मे माता कुशला, भ्राता कुशलः, अहञ्च कुशलः किन्तु भोः—भोजने मम कुशलं नास्ति । न मे पर्य्याप्तं भोजनमुपलभ्यते । निषादान् भक्षयेति मात्रा समादिष्टो यथेच्छं निषादानाहरम् । किन्तु सहस्रं भक्षयित्वापि न मे तृप्तिरभवत् । तस्मादपरमपि किञ्चिन्मे भक्ष्यं प्रदिशस्व । यद्भुक्त्वाऽमृतमाहर्तुं समर्थः स्याम् । अहं हि मातुर्दास्यविमोक्षार्थं सर्पैः प्रहितः सोममाहर्तुमुद्यतोऽस्मि । तत्र मे क्षुत्पिपासानिवृत्यर्थं भवान् भक्ष्यमाख्यातु" । कश्यप उवाच : देवलोके विश्रुतमिदं महापुण्यं सरो वर्तते । यत्रायमवाङ्मुखो हस्ती स्वमग्रजं कूर्मं सदा कर्षन्नास्ते । उभौ चेमौ पूर्ववैरानुबन्धात् परस्परवधैषिणौ युद्धदुर्म्मदौ संरभेते । तावेतौ यथेच्छमुपयुज्य संतुष्टोऽमृतमानय" । अथ कोऽयं गजः कूर्म्मोवेति सुपर्णेन पृष्टः कश्यपस्तत्र सर्वं गजकूर्म्मोपाख्यानमकथयत् । पुत्रहार्दाच्च ततो मांगल्यमकरोत्

युध्यतः सह देवैस्ते शुभं भवतु मंगलम् ।
पूर्णकुम्भो द्विजा गावो, यच्चान्यत् किञ्चिदुत्तमम् ॥१॥
शुभं स्वस्त्ययनं चापि भविष्यति तवाण्डज ! ।
युध्यमानस्य संग्रामे देवैः सार्द्धं महाबल ॥२॥
ऋचो यजूंषि सामानि, पवित्राणि हवींषि च ।
रहस्यानि च सर्वाणि सर्वे वेदाश्च ते बलम् ॥३॥

इत्येवमुक्तः पित्रा गरुडस्तं ह्रदमन्तिकादागत्य गजकूर्म्मावपश्यत् । स पितृवाक्य-प्रणोदितस्तरसाऽन्तरिक्षगो भीमवेगो नखेनैकेन गजमन्येन कूर्मं चाक्षिपत् ! तत उच्चैराकाश मुत्पपात ॥

तत्रालम्बं तीर्थमासाद्य स वेदवृक्षानुपागमत् । दिव्याः कनकशाखिनस्तस्य पक्षानिला हता नेदस्मान् भञ्ज्यादिति भीता इव समकम्पन्त । इत्थं तान् प्रचलाङ्गान् दृष्ट्वा स खेचरोऽन्यानन्यानतुलरूपाङ्गान् सागराम्बुपारक्षिप्तान् मनोरथफलद्रुमानुपचक्राम । यान् यानेवोपचक्राम, ते ते समकम्पन्त । न चैकोऽपि तमतुलपराक्रमं सुपर्णं वोढुमपारयत । अथैको रौहिणपादपः सुपर्णमुवाच ।

यैषा मम महाशाखा * शतयोजनमायता ॥ ( ० । १० । ५० )
एतामास्थाय शाखां त्व खादेमौ गजकच्छपौ ॥१॥

इत्थमुक्तः सुपर्णस्त द्रुमं प्रकम्पयन् द्रुतमभिपत्य तस्य यामेव शाखामाश्रयत् तामञ्जसा बभञ्ज । बलीयसा च तेन पद्भ्यां स्पृष्टमात्रा सा तरोः शाखाऽभज्यत । तथा च शाखाभङ्गं विलोकयन् स्मयमानो भग्नामप्येनामधारयत् । अथात्र शाखायामधोमुखान् लम्बमानान् वालखिल्यानपश्यत् । अथ व्यचिन्तयत् अत्र खलु ब्रह्मर्षयो लम्बन्ते, सा सम्पतन्तीयं शाखा तानेतान् हन्यात् । ततः शाखामेतामुपेक्षमाणो नेदेनान् हन्यामिति भावयित्वा सुपर्णो नखैर्दृढतरं गजकच्छपौ प्रगृह्य द्रुतमभिपत्य शाखामास्येन जग्राह । तत् तस्यातिदैवं कर्म्म दृष्ट्वा विस्मयोत्कम्पहृदया महर्षयः सुपर्णस्य नामधेयं विदेधिरे ।

गुरुं भारं समासाद्योड्डीन एव यतः खगः ॥
ततो गरुड इत्येवं विश्रुतोऽयं भविष्यति ॥१॥

---

* ६। विकलाः । ३० प्रतिविकलाः=एकं योजनमुच्यते । १० कलाः । ५० विकलाः= शतयोजनम् ।

ततः पद्भ्यां शैलान् प्रकम्पयन्नसौ शनै पर्य्यपतत् । तदित्थं सगजकच्छपः स सुपर्णो बालखिल्यानां दयार्थं बहून् देशान् न्यपतत् । अथापि स विश्रामस्थानं नाविन्दत ॥

स गन्धमादनं नाम पर्वतमञ्जसा गत्वा तपसि स्थितं पितरं कश्यपं ददर्श । स च भगवान् कश्यपः तमागतमभिप्रेक्ष्य तस्य संकल्प विदित्वा वचनमब्रवीत् ॥

पुत्र ! मा साहसं कार्षीर्म्मा सद्यो लप्स्यसे व्यथाम् ।
मा त्वां दहेयुः संक्रुद्धा बालखिल्या मरीचिपाः ॥१॥

अथ पुत्रकारणाद् बालखिल्यानप्येष विनयेन प्रसादयामास ।

प्रजाहितार्थमारम्भो गरुडस्य तपोधनाः ! ।
चिकीर्षति महत्कर्म्म तदनुज्ञातुमर्हथ ॥ १ ॥

एवमुक्ता बालखिल्याः शाखां मुक्त्वा तपसोऽर्थेन हिमवन्तं गिरिमाजग्मुः । ततोऽपयातेषु तेषु शाखाव्याक्षिप्तवदनः सुपर्णः पितरं कश्यपं पर्य्यपृच्छत् । "भगवन् ! इमां तरोः शाखां क्व विमुञ्चानि । भगवान् ममाख्यातु मानुषैर्वर्जितं देशम्" । ततः स कश्यपोऽन्यैर्मनसाप्यगम्यं हिमसंरुद्धकन्दरं निष्पुरुषं शैलं तस्याचख्यौ । स च तार्क्ष्यः सशाखागजकच्छपस्तरसा तं पर्वतमभ्यपतत् । यां शाखां शतचर्म्मापि बध्री न परिणहेत्, तामेतां शाखां प्रगृह्य नातिमहता कालेनासौ गरुडः शतसाहस्रं योजनान्तरमागमत् । स पितुः प्रदिष्टं पर्वतमागत्य तां महातनुं शाखां तत्रामुञ्चत् अथ तस्यैव गिरेः शृङ्गमास्थाय स गरुडस्तावुभौ कूर्म्मकुञ्जरौ ( गजकच्छपौ ) भक्षयित्वा पर्वतकूटाग्रादस्मादुत्पपात ॥

अथ देवेषु भयशंसिन उत्पाताः प्रावर्तन्त । सहसा वज्रमिन्द्रस्य प्रजज्वाल । दिवोल्का सार्चिः सधूमा नभसश्च्युता न्यपतत् । वसूना रुद्राणामादित्यानां मरुतां साध्यानां व देवाना स्वं स्वं प्रहरणं परस्परमुपाद्रवत् । अभूतपूर्वं च देवासुरसंग्रामे वाताः सनिर्घाता ववुरुल्काश्च सहस्रशः पेतुः । निरभ्रमेवाकाशं महास्वनं प्रजगर्ज । देवानामपि यो देवः सोऽपि शोणितमवर्षत्, देवानां माल्यानि मम्लु तेजांसि नेशुः । रौद्रा उत्पातमेघा बहु शोणितं ववृषुः । रजांसि चोत्थितानि तेषां मुकुटानि व्यधर्षयन् । तदित्थं दारुणानुत्पातान् पश्यन्नुद्विग्नमना इन्द्रो बृहस्पतिमभ्युवाच ।

किमर्थं भगवन् घोरा उत्पाताः सहसोत्थिताः ।
न च शत्रुं प्रपश्यामि युधि यो नः प्रधर्षयेत् ।

बृहस्पतिरुवाच । देवेन्द्र ! भवेत् तवापराधाद्वा, प्रमादाद्वा, ब्रह्मार्षीणां बालखिल्यानां

तपसा वा, विनतागर्भजः कश्यपस्य पुत्रः सुपर्णो नाम खेचरः सोमं हर्तुमभिप्रायः। अस्ति चैष समर्थः सोमाहरणे। स एषोऽसाध्यमपि साधयेत्, सर्वमस्मिन् संभावयामि॥ इन्द्र उवाच।

कीदृशो मेऽपराधोऽभूत् कः प्रमादश्च मेऽभवत्
तपसा बालखिल्यानां संभूतो गरुडः कथम्॥१॥

बृहस्पतिरुवाच। कश्यपस्य प्रजापतेः संतानकामया यजतः पुरा ऋषयो देवा गन्धर्वाश्च साहाय्यं चक्रुः। तत्र त्वं तावदिध्मानयने कश्यपेन न्ययुज्यथाः। अथ बालखिल्याश्च केचिदन्ये च तत्रैव कर्म्मणि न्ययुज्यन्त। तत्र वीर्य्यानुसारेण त्वमिध्मभारं गिरिप्रभं समुद्यम्य नातिकृच्छ्रादिवानयामासिथ। अथ मार्गे पलाशवृन्तिकामेकां वहतः संहतानङ्गुष्ठोदरवर्ष्मणो मन्दबलान् गोष्पदे सम्प्लुत्योदके क्लिश्यमानान् स्वेष्ववांगेषु प्रलीनान् ह्रस्वान् ऋषीनभिप्रेक्ष्य विस्मयाविष्टो वीर्य्योन्मत्तस्त्वमवहस्य तानवमन्य चातिक्रम्य च सत्वरमग्रेऽभ्यधावः। तेन रोषसमाविष्टाः सुभृशं जातमन्यवो बालखिल्यास्तदा शक्रभयङ्करं महदिव कर्मारेभिरे उच्चावचैर्मन्त्रैर्विधिवज्ज्वलितवेदसं जुहुवुरनेन कामेन॥

कामवीर्य्यः कामगमो देवराजभयप्रदः।
इन्द्रोऽन्यः सर्वदेवानां दारुणः सम्भवत्विति॥१॥
इन्द्राच्छतगुणः शौर्य्ये वीर्य्ये चापि मनोजवः।
तपसां नः फलेनाद्य दारुणः सम्भवत्विति॥२॥

अथैतद्बुध्वा भृशसंतप्तो भवान् कश्यपमेव शरणमुपागमत्। ततः कश्यपो बालखिल्यानुपागत्य कर्म्मसिद्धिमपृच्छत्। तमप्येते सत्यवादिनः— 'एवमस्तु'—इति प्रत्यूचुः। तान् कश्यपः सान्त्वपूर्वमुवाच। ब्रह्मणो नियोगात् त्रिभुवने तावदयमिन्द्रः कृतः। भवन्तः पुनरिन्द्रान्तरं कर्तुमयतन्त। तत्र न ब्रह्मणो वाक्यं मिथ्या कर्तुमर्हथ। भगवता च तपोधनानामयं संकल्पो न मिथ्या कर्तुमिष्यते। तस्मादेषोऽतिबलसत्ववानपरो भवद्भिश्चिकीर्षित इन्द्रः पतत्रिणामिन्द्रो भवतु। अस्य देवानामिन्द्रस्य प्रार्थमानस्य क्रियतां प्रसादः।' इत्येव कश्यपेनोक्ता बालखिल्या अभिसम्पूज्य कश्यपं प्रत्यूचुः। 'प्रजापते! अस्माकीनोऽयमत्र समारम्भ इन्द्रार्थः। भावत्कोऽयमत्र समारम्भोऽपत्यार्थः। तदिदं सफलं कर्म्म त्वयैव प्रतिगृह्यताम्। यथा तु भवानत्र श्रेयोऽनुपश्यति तथा विदधातु'। इत्येवमुक्तः कश्यपः 'साधु भोः' इत्युक्त्वा तदानीमेवोपस्थितामृतुमतीं विनतां नाम दाक्षायणीं देवीं प्रत्युवाच। देवि! सफलोऽभूत् समारम्भः। साधु संपत्स्यते भवत्या ईप्सितम्। द्वौ पुत्रौ महावीरौ त्रिभुवनेश्वरौ जनयिष्यसि। बालखिल्यानां तपसा मम संकल्पजौ तौ त्रैलोक्यपूजितौ महाभागौ भविष्यतः। एतौ सर्वपतत्रिणा

मिन्द्रत्वं कारयिष्यतः ।। देवि ! अप्रमादेनायं गर्भो भवत्या धार्य्यः'। अथ प्रीयमाणः प्रजापतिस्तदानीं त्वामभ्युवाच ।।

इन्द्रैताभ्यां सकाशात् ते न दोषो भविता कचित् ।
त्वत्सहायौ महावीर्य्यौ भ्रातरौ ते भविष्यतः ।। १ ।।
व्येतु ते शक्र ! सन्तापस्त्वमेवेन्द्रो भविष्यसि ।
किन्तु नैवं त्वया भूयः क्षेप्तव्या ब्रह्मवादिनः ।। १ ।।

ततो निर्विशङ्कस्त्वमगमस्त्रिदिवम् । अथ कालेन सा विनता द्वौ पुत्रावरुणं गरुडं च जनयामास । तत्रारुणो विकलाङ्गः सूर्य्यस्य पुरस्सरोऽक्रियत । गरुडस्तु पतत्रिणामिन्द्रत्वेऽभ्यषिच्यत । स एवायं महासत्वः सुपर्णो गरुडः केनापि निमित्तेनामृतं हर्तुमिदानीं महता समारम्भेणोपतिष्ठते"

इत्थं बृहस्पतिवचनाद् विदितवृत्तो वृत्रहाऽमृतरक्षिणः प्रोवाच ।

महावीर्य्यबलः पक्षी सोमं हर्तुमिहोद्यतः ।
युष्मान् संबोधयाम्येष स यथा न हरेद् बलात् ।। १ ।।

इत्थमुक्ता अमृतरक्षिणो देवा भूयो यत्नमास्थाय तदमृतं परिवार्य्य तस्थुः । अधारयन्त च काञ्चनानि वैदूर्य्यमयानि च महार्हाणि विचित्राणि कवचानि, भानुमन्ति च दृढानि चर्माणि, विविधानि च शिततीक्ष्णानि सविस्फुलिङ्गज्वालानि सधूमानि त्रिशूलचक्रपरिघ—परश्वध-शक्ति करवाल—गदाप्रभृतीनि स्वदेहरूपाणि घोरशस्त्राणि । इन्द्रश्च तेषामग्रतस्तस्थौ । तस्य चेन्द्रस्यानुपमबलवीर्य्यतेजः संस्मरन्तः स्वेषां शस्त्रविशेषाणां प्रभावं च भावयन्तः सर्वे देवा अमृतपरिरक्षणे दाक्ष्यं नाटयन्तो विगतकल्मषास्तस्थुः ।

तत्र दशैते देवाः प्राधान्येन अमृतरक्षणे नियुक्ता आसन् भौमनः, अश्वक्रन्दः, रेणुकः, क्रथनः, तपनः, उलूकः श्वसनः निमेषः प्ररुजः पुलिनश्चेति । एतत्पृष्ठपोषकाश्च बहवोऽन्ये देवाः । अग्रेसरश्चैषां भौमनो नाम देवः सुमहावीर्य्यो विद्युदग्निप्रभोऽप्रमेयात्मा चासीत । स प्रथमं तेन पतगेन्द्रेणाभ्ययुध्यत मुहूर्तमतुलं युद्धं कृत्वा विनिहतोऽभूत । अथ पक्षिणा तेन पक्षाघातेन रजोऽतितरां समुद्धूय लोकान्निरालोकान् कृत्वा तेन रजसा ते देवा अवाकीर्य्यन्त । ततो देवा रजसाच्छन्नाः परस्परमपश्यन्तो मोहमुपागमन् । एवं स गरुडस्त्रिदिवालयं संलोडयामास । अथ सहस्राक्षो देवराजो रजोवृष्टिं विक्षेप्तुं क्षिप्रं वायुमचोदयत् । स च वायुस्तरसा तद्रजः सर्वमपोवाह । ततो वितिमिरे जाते देवाः शकुनिमार्दयन् वर्म्मिणः सर्वे देवाः संहत्यैकहेलया तं प्रत्यभिद्रुत्य पट्टिशैः परिघैः, शूलैः, गदाभिः, क्षुरप्रैः, चक्रैः, करवालैरन्यैश्चानेकविध-शस्त्रविसर्गैः समन्ततो घोरमभिजघ्नुः । स चैवं बहुभिर्युध्यमानोऽपि निर्व्यथोऽन्तरिक्षं समुत्पत्य

देवानामुपरिस्थो भूत्वा सर्वभूतानि भीषयन् महामेघ इवाम्बरे भूरिशो गम्भीरनादमुच्चैर्ननाद । अथाकाशस्थ पक्षाभ्यामुरसा च समन्तादिव देवानितस्ततो व्यक्षिपत् । तथा च विक्षिप्ता भयभीता हतोत्साहाः सर्वतो दिशं दुद्रुवुः । नखतुण्डक्षताश्च बहवो बहु शोणितं सुस्रुवुः । पतगेन्द्रप्रधर्षितास्तदानीं तत्र न चैकेऽप्यपारयन् निर्भयं स्थातुम् । प्रजग्मुस्तु भयादिव मुहुर्मुहुः प्रेक्षमाणा एव साध्याः सगन्धर्वाः प्राचीम् । वसवः सहरुद्रा दक्षिणाम् । आदित्याः प्रतीचीम् । नासत्यावुत्तराम् । तानेतानमृतरक्षिणो देवानेवमुत्क्रान्तजीवितान् कृत्वा स पक्षिराजोऽमृतस्यार्थेऽग्रपथमतिक्रान्तः सर्वतोऽग्निमपश्यत् । स तं सततं महाज्वालाशतमुखमर्चिर्भिः सर्वतोऽम्बरमावृण्वानं तीक्ष्णांशुमिव दहन्तं चण्डवायुसमीरितमालोकयन् निरपाय तदुपायमालोचयामास । स तत्क्षणादेव गरुडो नवत्या नवतीर्मुखानां कृत्वा तैर्मुखैर्नदीः समापीय पुनर्जवेन तत्रागम्य तं प्रज्वलन्तं नाभिस्तरसा समस्तरत् । इत्थं तमग्निमभिप्रशाम्य ततः प्रवेष्टुकामोऽन्यदल्पं वपुश्चक्रे । मरीचिनिकरोज्ज्वलश्चासौ हिरण्मयो भूत्वा वारिवेग इवार्णवं बलात् प्रविवेश । सोऽमृतान्तिके निरन्तरतः परिभ्रमन्तमयोमय तीक्ष्णधारं चक्रं क्षुरपर्यन्तमपश्यत् । तद्धि सोमहारिणां छेदनमत्यर्थं घोररूपं देवनिर्मितं यन्त्रमासीत् । दृष्ट्वैव च तस्यान्तरं पर्यवर्तत सः । संक्षिप्य चाङ्गं क्षणेनासावारान्तरेणाभ्यपतत् । ततः पुनरस्य चक्रस्याधस्त दमृतरक्षणे नियुक्तौ महाघोरौ द्वौ महासर्पौ ददर्श । तौ हि दीप्तास्यौ दीप्तलोचनौ विषजिह्वौ चक्षुर्विषौ नित्यं क्रुद्धौ तरस्विनौ सदासंरब्धानिमिषदृशावास्ताम् । तयोरेकोऽपि यं पश्येत् स तत्क्षणाद् भस्मसाद् भवेत् । तथा दृष्ट्वा सुपर्णो नचिरेण तयोश्चक्षूंषि तावद्रजसा सहसाऽवृणोत् । तेन ताभ्यामदृष्टरूप एवासौ सर्वतः समताडयत् । तयोरंगे समाक्रम्य तरसा तयोर्मध्यमङ्गं सोऽच्छिनत् । अथ सोमभभ्यद्रवत् । तत्रामृतं समुत्पाट्य यन्त्रं च पुनः समुन्मथ्य जवेनासावुत्पपात । अथामृतमपीत्वैव स परिगृह्य ततो विनिःसृतस्तरसाऽऽगच्छदर्कप्रभामावारयन् ।

अथागच्छन्नाकाशे क्वचिदसौ वैनतेयो विष्णुना समेयिवान् । तस्य तेन लौल्यकर्म्मणा परितुष्टो नारायणस्तमुवाच–वरदोऽस्मीति । स वरद्वयं वव्रे । भगवन् विष्णो ! अन्तरिक्षगस्तवोपरि तिष्ठेयमिति । अमृतेन विनाप्यहमजरामरो भवेयमिति च । ततः 'एवमस्त्विति' विष्णुरुवाच । अथायं गरुडोऽप्येवं वरौ प्रतिगृह्य सुप्रसन्नो विष्णुमब्रवीत् । 'भगवन् ! विष्णो ! भवतेऽपि वरं दातुमिच्छामि स वृणोतु भगवानपि यथेच्छम् । ततो विष्णुरपि वरद्वयं वव्रे 'पक्षिराज ! गरुत्मन् ! वाहनस्त्वं मे भवेति । उपरि च त्वं मम ध्वजे नित्यं स्थास्यसीति । 'एवमस्तु' इत्युक्त्वा वेगाद्वायुं स्पर्द्धमानः स तरसा विहायसा निर्य्ययौ ।

अथैवं तं तदमृतं हरन्तं गगने व्रजन्तं गरुत्मन्तं विलोक्य वज्री वज्रेणाशु रोषेण

ऽभ्यताडयत् । तमुवाचेन्द्रमाक्रन्दे श्लक्ष्णया वाचा प्रहसन् गरुत्मान् ॥

ऋषेर्मानं करिष्यामि वज्रं यस्यास्थिसंभवम् ।
वज्रस्य च करिष्यामि मानं तव च वज्रभृत् ॥१॥
एतत् पत्रं त्यजाम्येकं यस्यान्तं नोपलप्स्यसे ।
न च वज्रनिपातेन रुजा मेऽस्तीह काचन ॥२॥

एवमुक्त्वा ततस्स पत्रमेकमुत्ससर्ज गरुडः । यतश्च तेनैकं सुरूपं पर्णमुत्सृष्टं ततोऽसौ सुपर्ण इत्यगमत् प्रसिद्धिम् । एतदाश्चर्यमयं चरितमस्यालोक्य 'महदिदं भूतमिति मत्वा सहस्राक्षस्तमुपेत्याभ्यभाषत । पक्षिराज ! अपरमपि यच्च यावच्च ते बलमस्ति, तत्सर्वं यथावद्विज्ञातुमिच्छामि । तथा नूनं त्वया सह सख्यमनन्तं चेच्छामि' ॥ गरुड उवाच । अयि पुरन्दर यथेच्छसि तथास्तु ॥ अस्तु त्वया सह मे सख्यम् । बलं तु ममासह्यं च महच्चावगच्छ । यद्यपि चैतत् स्वबलसंस्तवं स्वगुणकीर्तनं वा स्वयमेव क्रियमाणं सन्तो न प्रशंसन्ति तथापि त्वं ममेदानीं सख्यभावमागतोऽसि । न च सख्ये किञ्चिदवक्तव्यं, यदि सत्यं स्यात् । अथ पृष्टश्चाहं बलं कथयितुं नियुक्तोऽस्मि । न च पृष्टस्य किञ्चिदवक्तव्यं, यदि सत्यं स्यात् । अनिमित्तं तु यथेच्छमितस्ततः क्रियमाणमात्मश्लाघावचनं दोषाय भवति । न तथाहं ब्रवीमि । यादृशं तु मे बलं तत्तेऽभिधास्यामि ।

सपर्वतवनामुर्वीं ससागरजलामिमाम् ।
वहेयमिह पक्षेण शक्रमप्यत्र लम्बिनम् ॥ १ ॥
सर्वान् संपीडितान् वापि लोकान् सस्थाणुजङ्गमान् ।
वहेयमपरिश्रान्तो विद्धीदं मे महद् बलम् ॥ २ ॥

इत्युक्तवन्तं सुपर्णं किरीटी प्राह । एवमेतत् । यथा खल्वात्थ । अयि सुपर्ण ! सर्वं त्वयि संभाव्यते । अथातः प्रभृति मया सह ते दृढं सख्यं संपन्नम् । इदं तु मे वचनं सौहार्देनाभिनीयमानमनुगृह्यताम् ॥

न कार्यं यदि सोमेन, मम स मः प्रदीयताम् ।
अस्मात् ते हि प्रबाधेरन्, येभ्यो दद्याद् भवानिमम् ॥

गरुड उवाच—

किञ्चित् कारणमुद्दिश्य, सोमोऽयं नीयते मया ।
न दास्यामि समादातुं सोमं कस्मैचिदप्यहम् ॥१॥
यत्रेमं तु सहस्राक्ष निक्षिपेयमहं स्वयम् ।
त्वमादाय ततस्तूर्णं हरेथास्त्रिदिवेश्वर ॥२॥

इन्द्र उवाच—

'अनेन ते वाक्येनाहं सन्तुष्टोऽभूवम् । यं कंचन वरं मत्त इच्छसि तं गृहाण' । इत्थ मुक्तो गरुडः कद्रूपुत्रान्, उपधिकृतं मातुर्दास्यं च संस्मरन्निन्द्रं प्रत्युवाच । ईशोऽहं यद्यपि सर्वस्य र्थस्य संसाधने, तथापि ननु सांप्रतं तवार्थिता करिष्यामि । अयि देवराज ! मघवन् । भुजगा मे भक्ष्या भवेयुः--इति वरं याचे । 'तथा भविष्यतीत्युक्त्वा सोमं त्वया विनिक्षिप्तं हरिष्यामीत्यनुभाष्य शक्रस्तमन्वगच्छत्' ॥

अथ सुपर्णस्तूर्णं मातुरन्तिकमाजगाम तांश्च सर्वानेव सर्पानब्रवीत् ।

इदमानीतममृतं निक्षेप्स्यामि कुशेषु वः ।
स्नाता मङ्गलसंयुक्तास्ततः प्राश्नीत पन्नगाः ॥ १ ॥
अथोक्तं भवतामेतद्वचो मे प्रतिपालितम् ।
अदासी मम मातेयमद्यप्रभृति निश्चिता ॥ २ ॥

अथ तं तथेति प्रत्युक्त्वा सर्वे सर्पाः स्नातुं गताः । एतस्मिन्नन्तरे शक्रः क्षिप्रं तदमृत माक्षिप्य त्रिदिवं पुनर्जगाम । अथ सोमार्थिन तमुद्देशं समागताः सर्पाः सुप्रहृष्टा यत्र कुशसंस्तरे तदमृतमास्थापितं तत्र मृगयमाणा अपि नापश्यन् । अथ हृत प्रतिमायाकृतं च विज्ञाया मृतस्थानमिदमित्येवं बुध्या ते तदा दर्भानेव तान् लिलिहुः । ततस्तेन कर्मणा सर्पाणां जिह्वा द्विधा कृता दर्भाश्च तेऽमृतस्पर्शात् पवित्रिणोऽभूवन् ।

एवमनेन सुपर्णेन तदमृतं हृत च, पुनः प्रत्यपहृतं च । सर्पाश्चैते द्विजिह्वाः कृताः । अथ मातुर्दासीभावो निवर्तितः बलिना बलगर्वश्च निराकृतः । सर्वे चार्थाः संपादिताः । परमेण प्रहर्षेण मात्रा सह तत्र कानने विहृत्य स भुजङ्गभक्षः खगैः परमार्चितस्तां विनतामनन्दयत ॥

इमां कथां यः शृणुयान्नरः सदा, पठेत् तथा द्विजगणमुख्यसंसद ।
असंशयं त्रिदिवमियात् स पुण्यभाक् महात्मनः पतगपतेः प्रकीर्तनात् ॥

॥ इति सोमाहरणप्रस्तावः ॥

## ॥ इति सौपर्णोपाख्यानं संपूर्णम् ॥

# ॥ अनन्तोपाख्यानम् ॥



अथ कद्र्वाः सहस्रमासन् पुत्राः । तेषां बहुत्वेऽपि केषांचित् प्रधानानां नामानि कथ्यन्ते ॥

| | | | |
|---|---|---|---|
| १ शेषः (अनन्तः) | २१ दधिमुखः | ४१ शंखमुखः | ६१ शालिपिण्डः |
| २ वासुकिः (सर्पराज) | २२ विमलपिण्डकः | ४२ कूष्माण्डकः | ६२ हस्तिपिण्डः |
| ३ ऐरावतः | २३ आप्तः | ४३ क्षेमकः | ६३ पिठरकः |
| ४ तक्षकः | २४ करोटकः | ४४ पिण्डारकः | ६४ सुमुखः |
| ५ कर्कोटकः | १५ शंखः | ४५ करवीरः | ६५ कौणपाशकः |
| ६ धनञ्जयः | २६ बालिशिखः | ४६ पुष्पदंष्ट्रः (पुष्पदंतः) | ६६ कुठरः |
| ७ कालियः | २७ निष्ठानकः | ४७ विल्वकः | ६७ कुञ्जरः |
| ८ मणिनागः | २८ हेमगुहः | ४८ विल्वपाण्डरः | ६८ प्रभाकरः |
| ९ आपूरणः | २९ नहुषः | ४९ मूषकादः | ६९ कुमुदः |
| १० पिञ्जरकः | ३० पिङ्गलः | ५० शंखशिराः | ७० कुमुदाक्षः |
| ११ एलापत्रः | ३१ बाह्यकर्णः | ५१ पूर्णभद्रः | ७१ तित्तिरः |
| १२ वामनः | ३२ हस्तिपदः | ५२ हरिद्रकः | ७२ हलकः |
| १३ नीलः | ३३ मुद्गरपिण्डकः | ५३ अपराजितः | ७३ कर्दमः |
| १४ अनीलः | ३४ कम्बलः | ५४ ज्योतिकः | ७४ बहुमूलकः |
| १५ कल्माषः | ३५ अश्वतरः | ५५ श्रीवहः | ७५ कर्करः |
| १६ शबलः | ३६ कालीयकः | ५६ कौरव्यः | ७६ अकर्करः |
| १७ आर्य्यकः | ३७ वृतः | ५७ धृतराष्ट्रः | ७७ कुण्डोदरः |
| १८ उग्रकः | ३८ सम्वर्तकः | ५८ शंखपिण्डः | ७८ महोदरः |
| १९ कलशपोतकः | ३९ पद्मनागः | ५९ विरजाः | ७९ पुण्डरीकः |
| २० सुरामुखः | ४० पद्मः | ६० सुबाहुः | ८० अञ्जन |

इत्येताः सर्पजातयः काश्चनेह प्रदर्शिताः ॥

एषु शेषस्तावन्मात्रा दत्तं शापं श्रुत्वा खिन्नमनाः कद्रूं त्यक्त्वा यतव्रतो वायुभक्षः परमं तप आतस्थे । गन्धमादने, हिमवत्तटे, बदरीतीर्थे, गोकर्णे, पुष्करारण्ये चैवमन्यत्रान्यत्र च तीर्थेष्वायतनेष्वेकान्तशीलस्तपोऽतप्यत । तमेवं संशुष्कमांसत्वक्स्नायुं जटाचीरधरं सत्यधृतिं तप्यमानं दृष्ट्वा पितामहः प्रोवाच ।

किमिदं कुरुषे शेष ! प्रजानां स्वस्ति वै कुरु ।
त्वं हि-तीव्रेण तपसा प्रजास्तापयसेऽधुना ॥१॥
श्रमादस्मान्निवर्तस्व व्यथिष्ठास्तात मा चिरम् ।
ब्रू हि कामं च मे शेष ! हृदि यस्ते व्यवस्थितः ॥२॥

शेष उवाच-भगवन् ! मम सोदरा भ्रातरः सर्वे मन्दचेतसः सन्ति, परस्परं हि ते सततं वैरानुबन्धिनः शत्रुवदभ्यसूयन्ति । न तैः सह वस्तुमुत्सहे, तद्भवाननुमन्यताम् । ततो नैतान् पश्येयमित्यहमातिष्ठमुग्रं तपः । हन्त विनतां च सुतामिमे न मर्षयन्ति । य एवास्माकमपरो भ्राता वैनतेयोऽन्तरिक्षे दृश्यते यो हि पितुः कश्यपस्य वरप्रदानाद्‌दलीवास्ति बलवत्तरः, तमप्येते नितान्तं विद्विषन्ति । तेनाहमेषां दुश्चरित्रेण सततं खिन्नमना इह तपः समास्थाय कलेवरं त्यक्ष्यवस्यामि येन मे प्रेत्यभावेऽपि तैः सह संगमो न भवेदिति ।

तमेवंवादिनं शेषं पितामह उवाच । शेष ! जानामि ते भ्रातॄणां सर्वेषां स्वाभादुष्टानामनिष्टं विचेष्टितं सर्वम् । किन्तु पूर्वमेवैषां परिहारः कृतो वर्तते । मातुरपराधाद्धि ते भ्रातॄणां महद्भयमुपस्थास्यतीति पश्यामि । ततो न तेषामर्थेन शोकं कर्तुमर्हसि । अयि शेष ! त्वं तावन्मत्तो वरं वृणुष्व, यत्तेऽभिकाङ्क्षितं तत्तेऽभीष्टं प्रदास्यामि । त्वयि मे परमा प्रीतिः । दिष्ट्या बुद्धिश्च ते धर्मे निविष्टा दृश्यते । भूयश्च ते बुद्धिर्धर्म्मे सुस्थिरा भवतु ।

शेषउवाच-भगवन् ! एतदेवाहं भूयोऽभिकाङ्क्षे । अनवरतं मे धर्म्मे रमतां बुद्धिः शमे तपसि चेति ।

ब्रह्मोवाच ! शेष । प्रीतोऽस्मि तेऽनेन दमेन च शमेन च । अथ प्रजाहितं किञ्चिदादिशामि तदिदं मन्नियोगात् त्वया कार्य्यम् । शेष ! सम्यक् चलितेयं मही यथाऽचला स्यात् तथा त्वमिमां सशैलवनां ससागरग्रामविहारपत्तनां यथावत् संगृह्य तिष्ठ । अधो महीं गच्छ । एषा स्वयं ते विवरं प्रदास्यति इमां धरां धारयतः त्वया महत् प्रियं मे कृतं भविष्यति । यथाहं, यथा वा बलभृत् तथा त्वमिमामनन्त भोगैः परिगृह्यैको धारयितुमुत्सहस्व ।

यथाह भगवान् देवः- इत्युक्त्वा स शेषः पृथिव्या विवरं प्रविश्य तामिमां समुद्रनेमिं देवीं सर्वतः परिगृह्य शिरसा बिभर्ति । एवमयमनन्तः शेषो नाम नागो ब्रह्मणः शासनादिमां वसुधां धारयन्नधोभूमौ वसति । तस्य च साहाय्ये भगवान् पितामह सुपर्णं वैनतेयमनन्ताय प्रादात् ॥

॥ इत्यास्तीकमहाख्याने अनन्तोपाख्यानम् ॥

# ॥ नागराजोपाख्यानम् ॥

अथ वासुकिः सर्पराजो मातुः सकाशात् तं शापं श्रुत्वा 'कथमयं शापो न भवेद्'— इति चिन्तयामास। स ऐरावतप्रभृतीन् सर्वान् भ्रातॄनामन्त्र्य सुचिरं मन्त्रयामास। तत्रादौ वासुकिरुवाच। 'अयि मे भ्रातरः सर्वे! विदितमेव तु वः खल्वेतत्। यथा खलु मात्रा शापोदत्त इति। तस्येदानीं शापस्य मोक्षार्थं मन्त्रयित्वा यतामहे। यद्यपि च कल्पकाराः पठन्ति—

सर्वेषामेव शापानां प्रतिघातो हि विद्यते।
न तु मात्राभिशप्तानां मोक्षः क्वचन विद्यते॥ १॥

एवमव्ययस्याप्रमेयस्य सत्यस्य चाग्रतः सर्वे वयं शप्ताः स्म इत्येवं श्रुतवतो मे हृदि वेपथुर्जायते। नूनं सर्वविनाशोऽयमस्माकं समुपागत इति पश्यामि। सोऽयमव्ययो देवोऽपि न ह्येतां शपन्तीं प्रत्यषेधत्। तस्मादागच्छत, वयं सर्वे संमन्त्रयामो यथैतेषां सर्वेषां भुजङ्गानामनामयं स्यात्। अपि सर्व एव तावदस्माकं बुद्धिमन्तो विचक्षणा दृश्यन्ते। ततो मा नः कालोऽयमत्यगात्॥

इत्थमुक्ताः काद्रवेयास्तथेत्युक्त्वा समयं कर्तुं सर्वे समभ्याजग्मुः। यथायं शापः सर्पाणोपहन्यात् तथोपायानिह सर्वे चिन्तयामासुश्च। तत्रैके तावदाहुः—वयं ब्राह्मणा भूत्वा जनमेजयं भिक्षामो यज्ञस्ते न भवेदिति ॥१॥ अपरे त्वब्रुवन्, वयं सर्वेऽस्य मन्त्रिणो भविष्यामः। स सर्वेषु कार्य्येष्वर्थविनिश्चयं नः प्रक्ष्यति। तत्रास्य तथा बुद्धिं प्रदास्यामो यथा यज्ञो निवर्त्स्यति। स राजा बहुमतानस्मान् बुद्ध्वा व्यक्तं यज्ञार्थं प्रक्ष्यतीति मन्यामहे, ततो वयमपि हेतुभिः कारणैः प्रेत्य चेह च दारुणान् बहून् दोषान् प्रदर्शयन्तो नेत्येव तत्र वक्ष्यामहे। ततोऽयं यज्ञो न भविष्यतीति ॥२॥ अन्ये त्वाहु—सर्पसत्रविधानज्ञो यः क्रतोरस्योपाध्यायो भविष्यति तमेनं गत्वा कश्चिद्भुजङ्गो दशतां, स मरिष्यति। यज्ञकारे च तस्मिन् मृते सति स यज्ञो न भविष्यति॥३॥ परे प्रोचुः। ये चान्ये सर्पसत्रज्ञा अस्य ऋत्विजो भविष्यन्ति तानपि सर्वान् दशिष्यामः, एवं कृतं भविष्यति ॥४॥ अथान्ये धर्मात्मानस्तत्राब्रुवन्। अबुद्धिरेषा भवताम्। न खलु ब्रह्महत्या शोभना भवति। वदन्ति हि—

सम्यक् सद्धर्म्ममूला हि व्यसने शान्तिरुत्तमा ॥
अधर्म्मोत्तरता नाम कृत्स्नं व्यापादयेज्जगत् । इति ॥ ५ ॥

अन्ये त्वब्रुवन् । वयं तत्र मेघा भूत्वा भूमिं वर्षयन्तः समिद्धं जातवेदसं निर्वापयिष्यामः ॥ ६ ॥ अथ केचिदूचुः । बहवो नागा निशि गत्वा प्रमत्तानां स्रग्भाण्डं हरन्तु । एवंकृते विघ्नो भविष्यतीति ॥ ७ ॥ केचिदाहुः । यज्ञकाले शतशः सहस्रशो वा नागास्तत्रोपस्थाय सर्वतो जनान् दशन्तु । एवं कृते त्रासो भविष्यतीति ॥ ८ ॥ अथवा नागास्तत्र संस्कृतं भोज्यं स्वेन मूत्रपुरीषेण सर्वभोज्यविनाशिना दूषयन्तु ॥९॥ अथवा अस्य राज्ञस्तत्र वयमृत्विजो भविष्यामः। ततो 'दीयन्तां दक्षिणा' इति ब्रुवाणा यज्ञविघ्नं करिष्यामः, असौ च वश्यतां गतो यथेप्सितं नः करिष्यति ॥१०॥ अथवा तत्र जले प्रक्रीडन्तं राजानं गृहमानीय बध्नीमः । एवं सति यज्ञो न भविष्यति ॥११॥ अथवा तमेव राजानमाशु प्रगृह्य दशामः । तस्मिन्नेव मृते सति सर्वेषामनर्थानां मूलमेव छिन्नं भविष्यति । ततश्च कृतकृत्या वयं स्याम ॥१२॥ भगवन् सर्पराज ! अस्माकं तु सर्वेष मेषा नैष्ठिकी बुद्धिः । किन्तु हे राजन् ! भवानिह यथा साधु मन्यते तथा संविधीयताम् । इत्युक्त्वा सर्वे वासुकिं समुदैक्षन्त ॥

वासुकिरपि संचिन्त्य तानुवाच । भो भुजङ्गमाः ! नैषा वो नैष्ठिकी बुद्धिः । नैवमेवं वा कर्तुं साधु मन्यामहे । सर्वेषामेव वः सर्पाणां तास्ता बुद्धयो न मे साधु रोचन्ते, मया हि तद्विधातव्यं यदेकान्ततो भवतामिह नितान्त हितकरं स्यात् । भवतामहं रक्षको राजा । मदाश्रयौ हि नून भवतां गुणदोषौ । ततोऽहमनेन मातुः शापेन भृशं तप्ये । ज्ञातिवर्गस्य सौहार्द्याच्चात्मनः कारणाच्च बहुधा विमृश्यापि किमत्र संविधातव्यमिति न मे बुद्धिः किञ्चिद् चष्टे । अहं तु पुनरिदानीं भगवतः कश्यपस्य प्रसादनमेव श्रेयो मन्ये, यदि भवद्भ्योऽपि रोचेत ॥

अथैवं श्रुत्वा युक्तियुक्तमब्रवीदेलापत्रः । राजन् ! न स यज्ञो न भवता । न स राजा जनमेजयः पाण्डवेयः सहसा शक्योऽपकर्त्तुम् । य एवेह पुरुषो दैवेनोपहतो भवति स दैवमेवाश्रयते, नान्यत्तत्र परायणम् । तदिदं दैवमेवास्माकं भयमथ दैवमेवाश्रयामश्च । पूर्वं तु खलु मातुरुत्सङ्गमारूढोऽहं समुत्सृष्टे शापे पितामहमुपागम्य दुःखार्त्तानां देवानां वचः समश्रौषम् । तत्तेऽहं प्रब्रवीमि । तदाकर्ण्य तु यथा रोचते तथा क्रियताम् । देवा ह्यूचुः । 'भगवन् ? का नाम योषिदेवं प्रियान् पुत्रान् लब्ध्वा स्वयं शपेत् ऋते कद्रूम् । भगवन् ? तवाग्रत एव साऽऽत्मनः पुत्रानतिदारुणं शशाप । त्वयापि तदानीं तथेत्युक्त्वाऽनुमोदितमेव तद्वचो न तु सा तत्र वारिता । किमत्र कारणमिति विज्ञातुमिच्छामः' सोऽयमनिवार्य्य एवैषां शापोऽथवा पश्यति भगवान् किञ्चित् प्रतीकारमप्यस्य ।

ब्रह्मोवाच— बहवः पन्नगास्तीक्ष्णा घोररूपा विषोल्वणाः ॥
प्रजानां हितकामोऽहं न न्यषेधं ततस्तदा ॥ १ ॥
ये दन्दशूकाः क्षुद्राश्च पापाचारा विषोल्वणाः ॥
तेषां विनाशो भविता न तु ये धर्मचारिणः ॥ २ ॥
यायावरकुले धीमान् भविष्यति महानृषिः ॥
जरत्कारुरिति ख्यातस्तपस्वी नियतेन्द्रियः ॥ ३ ॥
सनामायां सनामा स कन्यायां द्विजसत्तमः ॥
अपत्यं वीर्य्यसंपन्नं वीर्य्यवान् जनयिष्यति ॥ ४ ॥
वासुकेः सर्पराजस्य जरत्कारुः स्वसा किल ॥
स तस्या भविता पुत्रः शापान्नागान् स मोक्ष्यति ॥ ५ ॥
आस्तीको नाम यज्ञं स प्रतिषेत्स्यति तं तदा ॥
तत्र मोक्ष्यन्ति भुजगा ये भविष्यन्ति धार्मिकाः ॥ ६ ॥

इत्थं पितामहवचः श्रुत्वा देवा 'एवमस्तु'—इति अब्रुवन्। पितामहोऽप्येवमुक्त्वा त्रिदवं ययौ' ॥

'राजन्' ! वासुके ! सोऽहमेवं पश्यामि । अस्ति ते भगिनी जरत्कारुर्नाम । तां भैक्षवद् भिक्षमाणाय सुव्रताय तस्मै ऋषये जरत्कारुनाम्ने प्रतिपादय । एवं चावश्यं नागानां भय शान्तिर्भविष्यतीति प्रतिजाने एष हि मोक्षः श्रुतो मया' ।

इत्थमेलापत्रवचः श्रुत्वा सर्वे ते नागाः प्रहृष्टमनसः 'साधु २ इत्यब्रुवन् । ततः प्रभृति वासुकिस्तां जरत्कारुं नाम भगिनीं परया प्रीत्या पर्य्यरक्षत्। ततो नातिमहानिव कालः समतीतोऽभूत् । अथ देवासुराः सर्वे वरुणालयं ममन्थुः । तत्रायं वासुकिर्नेत्रमक्रियत । समाप्ते चैतस्मिन् समुद्र मन्थनकर्म्मणि वासुकिना सार्द्धं देवाः पितामहमुपगम्य प्रार्थयामासुः । भगवन् ? शापभीतोऽयं वासुकिर्भृशं तप्यते, तस्यैतन्मानसं शल्यं समुद्धर्तुमर्हसि । अयं हि नागराजः सदास्मकं हितः प्रियकारी च । ततोऽस्मै भगवान् प्रसादं करोतु, इममस्य मनोज्वर शमयतु, । ब्रह्मोवाच-देवाः ? यदस्यैलापत्रेण नागेन पुराभिहितं तदस्य मनोज्वरनिवृत्यर्थं मयैव मनसा वितीर्णमासीत् । स एष प्राप्तकाल तत्तथा करोतु । विनशिष्यन्ति त एव येऽत्यन्तभयङ्कराः पापाः, न त्वेव ते, ये धर्म्मचारिणः स्युः । उत्पन्नः स जरत्कारुरिदानीमुग्रे तपसि वर्तते । तस्यैव काले जरत्कारुं भगिनीं प्रयच्छतु । एवं सत्यस्य शल्यं समुद्धृतं स्यात् । यथा नामोक्तमेलापत्रेण शापान्तस्तत तत्तथा न तदन्यथा ।
इत्थमुक्तो नागराजः कतिपयन्नागान्न्ययुज्यत जरत्कारौ ।

जरत्कारुर्यदा भार्य्यामिच्छेद् वरयितुं प्रभुः ॥
शीघ्रमेत्य तदाख्येयं तन्नः श्रेयो भविष्यति ॥ १ ॥

॥ इत्यास्तीकोपाख्याने नागराजोपाख्यानम् ॥

# ॥ हयग्रीवोपाख्यानम् ॥

अथ कदाचिद् भगवान् विष्णुर्दशवर्षसहस्राणि दारुणं रणं कृत्वा परिश्रान्तः समे देशे शुभे स्थाने पद्मासनं विधाय धरास्थितं सज्यं धनुः कण्ठदेशेऽवलम्ब्य धनुःकोट्यां भारं दत्वा निद्रामाप। तत्र श्रान्तत्वाद्दैवयोगाच्चातिनिद्रितो जातः। अथ कियता कालेन तदा सवासवाः सर्वे देवा यज्ञं कर्तुं समुद्यता यज्ञपुरुषस्य तस्य दिदृक्षया तावद्वैकुण्ठं गताः। तत्रादृष्ट्वा ज्ञानदृष्ट्या पुनरन्यत्र दृष्ट्वा तत्रैव गतास्तमेनं योगनिद्रावशंगतं विचेतनमनुवीक्ष्य प्रतीक्षया ते सर्वेऽपि तत्रासांचक्रिरे। अथैवमुपतिष्ठमानेषु तेषु शक्रः प्रोवाच। किमिदानीं कर्तव्यं कथं चास्य निद्राभङ्गः कार्य्यः। अथैतच्छ्रुत्वा शम्भुः प्रोवाच।

"निद्राभङ्गः कथाच्छेदो दम्पत्योः प्रीतिभेदनम्।
शिशुमातृविभेदश्च ब्रह्महत्यासमं स्मृतम् ॥"

तस्मात् निद्राभङ्गे दोषो भवति उपस्थितं (प्रस्तुतं) च कार्य्यमवश्यं संसाधनीयं भवति। तस्मात्तथाऽनुष्ठेयं यथा जातेऽपि निद्राभङ्गे निद्राभङ्गदोषो नास्माननुवर्तेत विष्णुश्च प्रबुध्येत। तथाचैतत्कार्य्यकरणक्षमं कञ्चन जन्तुं जनयतु भगवान् प्रजापतिः। अथैवं विचारे देवैरनुमोदिते भगवान् ब्रह्मा दारुभक्षणदक्षां वम्रीं नाम कीटजातिमुत्पादयामास। आदिदेश च वम्रि! इदं धरास्थितं धनुरग्रं भक्षय। भक्षितेऽग्रे धनुरिदं निम्नं गमिष्यति। अवश्यं तत्र विष्णुः प्रबुद्धो भविष्यति। सर्वं च तदा देवकार्य्यं सेत्स्यति इति। अथ वम्री प्रार्थयामास। हे भगवन्तः। निद्राभङ्गकरणे भवादृशा दोषमनुपश्यन्ति। तत् किमिति निष्फलं परसुखभङ्गपापे प्रवर्तय।

सर्वः स्वार्थवशो लोकः कुरुते पातकं क्वचित्।
कः कुर्य्यादीदृशं पापं यत्र स्वार्थो न सिध्यति ॥

ब्रह्मोवाच—यज्ञोऽस्माकमिदानीमपेक्षितोऽर्थः। अतः परं तवापि तत्र भागं करिष्यामः होमकर्मणि क्रियमाणे हविदानाद् यत्किञ्चिदेव बहिःकुण्डं पार्श्वे पतिष्यति तं ते भागं विजानीहि। अथैवमुक्ता सा वम्री त्वरया धनुरग्रंचखाद। ततः प्रत्यञ्चा विमुक्ताऽभवत्-उत्तराकोटिश्च। तत्क्षणादकस्मात्तेनाहतं सकुण्डलं समुकुटं विष्णोः शिरश्छिन्नं क्वापि गतम्। अथैतद्दुर्योगज-

नितानेकानेकघोरतरोत्पातक्रमिकशान्तौ जायमानायामवहिताः सर्वे देवाः पश्चाद् विष्णो कबन्धमनुपश्यन्त एव भूयः कलुषितेन्द्रियाः समभवन्। आः! किमिदं जातं हन्त! किमतः परं भावि, केयमतर्किता घटना इत्येवमाकुलितेषु देवेषु सान्त्वयन्निव य बृहस्पतिस्तदोवाच हे महाभागाः! उपस्थितायामापदि धीराः खलु न वृथा रुदितैःक्रन्दितैरापत्तिजनितशोकसंवर्द्धनैरन्यान्यक्लेशसमर्थनैः कालमतिवाहयन्ति। उपाये तु तदपायसमर्थे नचिरात् प्रवर्त्तन्ते समर्थन्ते च दैवादापतितामापदमुपशमयितुं पुरुषकारैः।

> दैवं पुरुषकारश्च देवेश सदृशावुभौ।
> उपायश्च विधातव्यो दैवात् फलति सर्वथा॥

इन्द्र उवाच—

> दैवमेव परं मन्ये धिक् पौरुषमनर्थकम्।
> विष्णोरपि शिरश्छिन्नं सुराणामपि पश्यताम्॥

ब्रह्मोवाच—

> अवश्यमेव भोक्तव्यं कालेनापादितंच यत्।
> शुभं वाप्यशुभं वापि दैवं कोऽतिक्रमेत् पुनः॥ १॥
> देहवान् सुखदुःखानां भोक्ता नैवात्र संशयः।
> पश्य कालवशात् कृत्तं शिरो मे शम्भुना पुरा॥ २॥
> तथैव लिङ्गपातोऽभून्महादेवस्य शापतः।
> तथैवाद्य हरेर्मूर्द्धा पतितो लवणाम्भसि॥ ३॥
> सहस्रभगसंप्राप्तिर्दुःखं चापि शचीपतेः।
> स्वर्गाद् भ्रंशस्तथा वासः कमले मानसे सरे॥ ४॥
> एते दुःखस्य भोक्तारः केन दुःखं न भुज्यते।
> संसारेऽस्मिन् महाभागास्तस्माच्छोकं त्यजन्तु वै॥ ५॥

अथ ब्रह्मप्रजापतेरादेशेन वेदैर्जगन्मयामाराधयत्सु देवेष्वाकाशस्था अशरीरिणी वागुवाच। नाकारणं कार्य्यं भवति। शृण्वन्तु देवाः कारणं विष्णुशीर्षपतनस्य। अयं विष्णु रन्तिके स्थितां समुद्रजामेकदा मुखे वीक्ष्याकस्माज्जहास। अथ सा सशङ्काऽभूत् किमिति मामद्य भगवान् हसति। किं मे मुखमद्य सुरूपमपि केन हेतुना विरूपं दृष्टम्। नचाकारणं हास्यं भवति। मन्ये ममानेन सपत्नी कृता यद्येवं भगवन् मामुपहससि। तवेदं शिरः पततु इति शनकैः समुवाच। स्त्रीस्वभावाद्भवितव्यात्कालयोगाच्चावितर्कितमेव तदायं स्वसुखनाशनः शापो मुखाद्विनिर्गतः।

सपत्नीसंभवं दुःखं वैधव्याद्‌धिकं स्त्रियः ॥
मन्यन्ते नैव शोचन्ति तदानीं स्वहिताहितम् ॥ ॥ १ ॥
अनृतं साहसं माया मूर्खत्वमतिलोभता ॥
अशौचं निर्दयत्वं च स्त्रीणां दोषाः स्वभावजाः ॥ ॥ २ ॥

तदेतेन शापभोगेनास्य विष्णोः शिरो लवणाम्बुधौ निमग्नम् । अन्यदपि कारणं भवतीति शृण्वन्तु । पुरा हयग्रीवो नामातिबली दैत्योऽभूत् । स च सरस्वत्यास्तीरे परमदारुणं तपश्चक्रे । तत्तपसा परितुष्टां मां जगन्मायामनुवीक्ष्य वरं वव्रे । "अहं सुरासुरैरजेयो मृत्युरहितो भूयासम् । इति । अथ—

जातस्य हि ध्रुवो मृत्युर्ध्रुवं जन्म मृतस्य च ।
मर्य्यादा चेदृशी लोके संभवेत् कथमन्यथा ॥

एवं त्वं मरणे निश्चयं कृत्वा मनसा विचार्य्य यथेष्टं वरं वरयेति मयोक्ते तेनोक्तम्—

हयग्रीवाच्च मे मृत्युर्नान्यस्माज्जगदम्बिके ।
इति मे वाञ्छितं कामं पूरयस्व मनोगतम् ॥

ततः—

गृहं गच्छ महाभाग गुरु राज्यं यथासुखम् ।
हयग्रीवादृते मृत्युर्न ते नूनं भविष्यति ॥

इत्येवं मत्तो वरं प्राप्य मत्तः स दुष्टात्मा मुनीन् वेदांश्च सर्वशः पीडयति, अद्य भुवनत्रये न कोऽपि तस्य हन्ता विद्यते । तस्मात् त्वष्टा देवो हयस्य शीर्षं समुद्धृत्य विष्णोरत्र कबन्धे संयोजयिष्यति । ततोऽयं विष्णुर्हयग्रीवो भूत्वा देवानां हितकाम्यया तमसुरं हनिष्यति । इत्थमशरीरिणीं वाचं श्रुत्वाऽतिसंतुष्टा देवा देवशिल्पिनं त्वष्टारं शीर्षाभियोजने नियोजयामासुः । तेनासौ हयग्रीवो भूत्वा कियता कालेन तमसुरं हयग्रीवं संख्ये निहितवान् जगच्च सुखयुक्तं कृतवान् ॥

इयं चाख्यायिका शतपथब्राह्मणे चतुर्दशे काण्डे प्रवर्ग्यारम्भेऽभिहिता । स यः स विष्णुर्यज्ञः सः स यः स यज्ञोऽसौ स आदित्यस्तद्धदे यशो विष्णुर्न शशाक संयन्तुं तदिदमप्येतर्हि नैव सर्व इव यशः शक्नोति संयन्तुं स तिसृधन्वामादायापचक्राम । स धनुरार्त्न्यां शिर उपस्तभ्य तस्थौ । तं देवा अनभिधृष्णुवन्तः समन्तं परिण्यविशन्त ता ह वम्र्य ऊचुः । इमा वै वम्र्यो यदुपदीकाः योऽस्य ज्यामप्यद्यात् किमस्मै प्रयच्छेतेत्यन्नाद्यमस्मै प्रयच्छेम ॥

## ॥ इति हयग्रीवोपाख्यानम् ॥

# ॥ ध्रुवचरितम् ॥

---

मनोः स्वायम्भुवस्य द्वौ पुत्रौ, प्रियव्रतः उत्तानपादश्चेत्युक्तम् । तत्र उत्तानपादस्य द्वे भार्य्ये, सुरुचिः सुनीतिश्च । तत्र सुरुचिरत्यन्तवल्लभा उत्तानपादस्य, सुनीत्यां तु तथा नातितरां प्रीतिरासीत् । तस्य सुरुच्यां सुत उत्तमः सुनीत्यां ध्रुवः ।

राजासनस्थितस्य पितुरुत्तानपादस्याङ्कमाश्रितं भ्रातरमुत्तमं दृष्ट्वा ध्रुवोऽपि तमङ्कमारोढुं मनश्चक्रे । राजा तु प्रणयादुत्सङ्गमारुरुक्षुमपि तं सुरुच्याः प्रत्यक्षे नाभ्यनन्दत । सुरुचिरेव च ध्रुवं प्रत्युवाच-अरे ध्रुव ! सत्यं ! त्वमप्यस्यैव राज्ञः सुतः, किन्तु न त्वं मया धृतः ममोदरे चासम्भूय अन्यस्त्रीगर्भजातेन त्वया उत्तमं स्थानमुत्तमयोग्यमारोढुं किमिति वृथा मनोरथः क्रियते, सुनीत्यामात्मनो जन्म किं त्वया नावगम्यते । इत्येवं विमातृभाषितं श्रुत्वा कुपितो ध्रुवस्तत्क्षणात् पितरमुत्सृज्य निजमातुर्मन्दिरमाजगाम । तं तथा कुपितमीषत्प्रस्फुरिताधरं दृष्ट्वा सुनीतिरङ्कमारोप्यैतदब्रवीत्—वत्स ! कस्ते कोपहेतुः, कस्त्वां नाभिनन्दति, को वा त्वत्पितरमवमन्य तवापराध्यति । इत्युक्तो ध्रुवः सकलं वृत्तं श्रावयामास । श्रुत्वा च सुनीतिर्दीर्घं निश्वस्य दुर्म्मना अब्रवीत्—वत्स ! पुत्रक ! सत्यमिदमाह सुरुचिः, सत्यं मन्दभाग्योऽसि, सत्यं च मन्दभाग्यायाः ममोदरे सम्भूतोऽसि, कथमन्यथा एवमवहेलितोऽसि, न हि पुण्यवानेवमुच्यते सपत्नैः, अथापि तात ! नोद्वेगः कर्तव्यः, यत्तु पुराकृतं तदन्यः कोऽपहर्तुं शक्नोति, कश्चाकृतं दातुं शक्नोति, सर्वं च शुभाशुभं प्राणिनः स्वकर्मायत्तमेवोपलभन्ते इति निश्चित्य नार्हसि दुःखं कर्तुम् । यतो यस्य यावत् स तेनैव स्वेन भागधेयेन तुष्येदिति बुद्धिमतां समयः । अथवा यदि कश्चिदभ्युन्नतिमभिलषेत् स पुण्योपचये यत्नं कुर्यात् अतस्त्वमपि धर्मात्मा सुशीलो मैत्रः सर्वप्राणिहिते रतः स्याः, यथापो निम्नं प्रवणा तथा सम्पदः पात्रमायान्ति । ध्रुवेणोक्त, अम्ब ! यदिदं किञ्च प्रशमाय ब्रवीषि न च तद् वचसा भिन्ने मम हृदये स्थानं लभते । अम्ब ! पश्य मे प्रभावम् । अहं तथा यतिष्यामि येन सर्वजगत्पूजितं सर्वोत्तमोत्तमं स्थानं प्राप्स्यामि । स चोत्तमो मम भ्राता पित्रा दत्तमेव राजासनमाप्नोतु, अहं पुनरन्यदत्तं स्थानमनभिलषमाण स्वीयकर्म्मप्रभावेण तादृशं स्थानमर्जितुमिच्छामि यन्मम पितापि न प्राप । इत्युक्त्वा गृहान्निर्गतो ध्रुवस्तत्पुरान्निष्क्रम्य बाह्योपवनं प्राप्त एव पूर्वागतान्

सप्त मुनीन् ददर्श प्रणिपत्याभ्यभाषत च महर्षयः! मामुत्तानपादतनयं सुनीत्यां जातं निर्वेदादिह युष्माकमन्तिकं प्राप्तं निबोधत। ऋषय ऊचु-चतुःपञ्चाब्दसंभूतो बालकस्त्वमसि न च ते निर्वेदकारणमद्यापि विद्यते। न च भवतश्चिन्त्यं किंचित् यतस्ते पिता ध्रियते, नचैवेष्टवियोगादिकं ते पश्यामः, न च ते शरीरे व्याधिरुपलक्ष्यते, तत्तर्हि किन्निमित्तं ते निर्वेदः। ततः एवं पृष्टो ध्रुवः सर्वं वृत्तं निर्वेदकारणं कथयामास। तन्निशम्य महर्षयः प्रोचुः—

अहो क्षात्रं बलं तेजो बालस्यापि यदक्षमा।
सपत्न्या मातुरप्युक्तं हृदयान्नापसर्पति॥ १॥

भो क्षत्रियदायाद! किमिदानीं त्वया निर्वेदात्कर्तुं व्यवसितम्। किञ्च तवास्माभिः साहाय्यमपेक्षितं तदुच्यताम्। इत्येवमुक्तो ध्रुवः प्राह—नाहमर्थं न वा राज्यमभीप्सामि, किन्तु तदहं स्थानमिच्छामि, यदिहान्येन पुरा न भुक्तं स्यात्, तन्मे कथ्यतां केनोपायेन लब्धुं शक्नोमीति। इत्येवं प्रार्थिता मरीच्यत्र्यङ्गिरःपुलस्त्यक्रतुपुलहवशिष्ठाः सर्वं एव सप्तर्षयः प्रोचुः—

अनाराधितगोविन्दैर्नरैः स्थानं नृपात्मज।
नहि सम्प्राप्यते श्रेष्ठं तस्मादाराधयाच्युतम्॥

पुनराह ध्रुवः—कथमस्याराधनं किं च मया जप्तव्यं तदपीह प्रसादसुमुखा भगवन्तो ब्रुवन्तु। ऋषय ऊचः –

बाह्यार्थानखिलांश्चित्तं त्याजयेत् प्रथमं नरः।
तस्मिन्नेव जगद्धाम्नि ततः कुर्वीत निश्चलम्॥ १॥
एवमेकाग्रचित्तेन तन्मयेन धृतात्मना।
जप्तव्यं तन्निबोधैतत् त्वं नः पार्थिवनन्दन॥ २॥
हिरण्यगर्भपुरुषप्रधानाव्यक्तरूपिणे।
"ओं नमो वासुदेवाय" शुद्धज्ञानस्वभाविने॥ ३॥

अथैवं लब्धमन्त्रो ध्रुवः कृतकृत्यमिवात्मानं मन्यमानः प्रणिपत्यैतान्महर्षीन् यमुनातटं निर्जगाम यत्र पुरा मधुना दैत्येनाधिष्ठितत्वान्मधुवनमिति लोके विख्यातं स्थानमासीत् ततो मधुपुत्रं लवणं रक्षो हत्वा शत्रुघ्नेन मथुरा नाम पुरी निर्वृत्ता, यत्रास्ति नित्यमेव हरेः सांनिध्यम्, तत्र स्थिते सप्तर्षिभिर्यथोद्दिष्टं कुर्वति दुश्चर तपस्तपति तस्मिन् वामपादस्थिते भूमिरर्द्धेन ननाम दक्षिणपादस्थिते चार्द्धं द्वितीयं ननाम। पादाङ्गुष्ठेन च पृथ्वीं सम्पीड्य तस्मिंस्थिते सहपर्वतैरियं वसुधा चचाल, नद्यो नदीः समुद्राश्च परमं क्षोभमाययुः। तदा यामा

नाम देवाः परमाकुला इन्द्रेण सह संमन्त्र्य ध्रुवस्य ध्यानभङ्गं प्रचक्रमुः । एवं कूष्माण्डा अप्यातुराः सहेन्द्रेण विविधै रूपैस्तयन्तं समाधिभङ्गं कर्तुमारब्धाः । तदा मायामयी तन्माता सुनी तर्नाम साम्ना तत्पुरतः स्थिता बहुधा करुणां वाचमुवाच ।

पुत्र कामान्निवर्तस्व शरीरव्ययदारुणात् ।
निर्बन्धतो मया लब्धो बहुभिस्त्वं मनोरथैः ॥ १ ॥
दीनामेकां परित्यक्तुमनाथां न त्वमर्हसि ।
सपत्नीवचनाद्वत्स अगतेस्त्वं गतिर्मम ॥ २ ॥
क्व च त्वं पञ्चवर्षीयः क्व चैतद्दारुणं तपः ।
निवर्त्यतां मनः कष्टान्निर्बन्धात् फलवर्जितात् ॥ ३ ॥
कालः क्रीडनकानां ते तदन्तेऽध्ययनस्य च ।
ततः समस्तभोगानां तदन्ते चेष्यते तपः ॥ ४ ॥
कालः क्रीडनकानां यस्तव बालस्य पुत्रक ।
तस्मिंस्त्वमित्थं तपसि किं नाशायात्मनो रतः ॥ ५ ॥
मत्प्रीतिः परमो धर्मो वयोऽवस्थाक्रियाक्रमम् ।
अनुवर्तस्व, मा मोहं, निवर्तास्मादधर्मतः ॥ ६ ॥
परित्यजति वत्साद्य यद्येतन्न भवांस्ततः ।
त्यक्ष्याम्यहमपि प्राणांस्ततो वै पश्यतस्तव ॥ ७ ॥

इत्येवमनेकधा विलपन्ती वाष्पाकुलितलोचनामपि मातरमसौ विष्णुसमाहितमनाः पश्यन्नपि न ददर्श । ततः सा मायासुनीतिः--

वत्स वत्स सुघोराणि, रक्षांस्येतानि भीषणे ।
वनेऽभ्युद्यतशस्त्राणि, समायान्त्यपगम्यताम् ॥

इत्युक्त्वा विलिल्ये । अथ रक्षांस्याविर्बभूवुः । तानि चाभ्युद्यतोग्रशस्त्राणि ज्वालामालाकुलैर्मुखैरतीवोग्रान्नादान्मुमुचुः शस्त्राणि भ्रामयामासुश्च ।

हन्यतां हन्यतामेष, छिद्यतां छिद्यतामयम् ।
भक्ष्यतां भक्ष्यतां चायमित्यूचुस्ते निशाचराः ॥ १ ॥

एवं योगयुक्तस्य तस्य बालस्य त्रासाय शतशः शिवाः सज्वालकवलैर्मुखैः सवशो नेदुः । सिंहोष्ट्रमकराननाः रजनीचराश्च नानाविधान्नादान्नेदुः किन्तु तानि रक्षांसि ते नादास्ताः शिवाः तानि चायुधानि गोविन्दासक्तचित्तस्य नेन्द्रियगोचरं जग्मुः । ततः सर्वासु मायासु

विलीनासु तत्पराभवशङ्किताः सुराः परमं क्षोभमाययुः। समेत्य च ते जगद्योनिं हरिं शरणं याताः सर्वे देवा भगवन्तमूचुः। देवदेव जगन्नाथ वयं ध्रुवस्य तपसा तप्तास्त्वां शरणं प्राप्ताः स्मः, न विद्मः किमयं शक्रत्वमभीप्सति, सूर्यत्वं कुबेरवरुणसोमानां पदं वाभिलषतीति, यथा-यथा शशाङ्कः कलालेशैरहरहः पूर्यते तथायमहर्निशं तपसा वृद्धिं प्राप्नोति, तदस्माकं प्रसीद, ध्रुवमेनं तपसः सान्निवर्त्य हृदयाच्छल्यमुद्धर। भगवानुवाच। नेन्द्रत्वं न सूर्यत्वं न वरुणत्वं न वा कुबेरत्वमयं प्रार्थयते, किन्तु यमयं कामं कामयते तमहमधुना पूरयित्वा तपसस्तं बालं निवर्तयामि यूयं विगतज्वरा यथाकामं स्वस्थानं यात। इत्येवमुक्ताः शक्रादयो देवाः प्रणम्य स्वानि स्वानि धिष्ण्यानि प्रययुः। भगवानपि चतुर्भुजवपुर्ध्रुवमुपगम्योवाच वरं वरय सुव्रतेति। तत उन्मीलिताक्षो ध्रुवः पुरतो ध्यानदृष्टं हरिं ददृशे, स्तोतुं प्रचक्रमे च॥

भूमिरापोऽनलो वायुः खं मनो बुद्धिरेव च।
भूतादिरादिप्रकृतिर्यस्य रूपं नतोऽस्मि तम्॥ १॥
शुद्धः सूक्ष्मोऽखिलव्यापी प्रधानात्परतः पुमान्।
यस्य रूपं नमस्तस्मै पुरुषाय गुणाशिने॥ २॥
भूरादीनां समस्तानां गन्धादीनां च शाश्वतः।
बुद्ध्यादीनां प्रधानस्य पुरुषस्य च यः परः॥ ३॥
तं ब्रह्मभूतमात्मानमशेषजगतः परम्।
प्रपद्ये शरणं शुद्धं त्वद्रूपं परमेश्वर॥ ४॥
बृहत्त्वाद्बृंहणत्वाच्च यद्रूपं ब्रह्मसंज्ञितम्।
तस्मै नमस्ते सर्वात्मन् योगिचिन्त्याविकारवत्॥ ५॥
सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात्।
सर्वव्यापी भुवः स्पर्शादत्यतिष्ठद्दशाङ्गुलम्॥ ६॥
यद्भूतं यच्च वै भाव्यं पुरुषोत्तम तद् भवान्।
त्वत्तो विराट् स्वराट् सम्राट् त्वत्तश्चाप्यधिपूरुषः॥ ७॥
अत्यरिच्यत सोऽधश्च तिर्यक् चोर्द्ध्वं च वै भुवः।
त्वत्तो विश्वमिदं जातं त्वत्तो भूतभविष्यती॥ ८॥
त्वद्रूपधारिणश्चान्तर्भूतं सर्वमिदं जगत्।
त्वत्तो यज्ञः सर्वहुतः पृषदाज्यं पशुर्द्विधा॥ ९॥
त्वत्त ऋचोऽथ सामानि त्वत्तश्छन्दांसि जज्ञिरे।
त्वत्तो यजूंष्यजायन्त त्वत्तोऽश्वाश्चैकतोदतः॥१०॥

गावस्त्वत्तः समुद्भूताः त्वत्तोऽजा अवयो मृगाः ।
त्वन्मुखाद् ब्राह्मणस्त्वत्तो बाह्वोः क्षत्रमजायत ॥११॥
वैश्यास्तवोरुजाः शूद्रास्तव पद्भ्यां समुद्गताः ।
अक्ष्णोः सूर्योऽनिलः श्रोत्राच्चन्द्रमा मनसस्तव ॥१२॥
प्राणोऽन्तः सुषिराज्जातो मुखादग्निरजायत ।
नाभितो गगनं द्यौश्च शिरसः समवर्तत ॥१३॥
दिशः श्रोत्रात् क्षितिः पद्भ्यां त्वत्तः सर्वमभूदिदम् ।
न्यग्रोधः सुमहानल्पे यथा बीजे व्यवस्थितः ॥१४॥
संयमे बीजमखिलं बीजभूते तथा त्वयि ।
बीजादङ्कुरसंभूतो न्यग्रोधः सुसमुत्थितः ॥१५॥
विस्तारं च यथा याति त्वत्तः सृष्टौ तथा जगत् ।
यथा हि कदली नान्या त्वक्पत्राद्वाथ दृश्यते ॥१६॥
एवं विश्वस्य नान्यस्त्वं त्वत्स्थायीश्वर दृश्यते ।
ह्लादिनी सन्धिनी संवित् त्वय्येका सर्वसंस्थितौ ॥१७॥
ह्लादतापकरी मिश्रा त्वयि नो गुणवर्जिते ।
पृथग्भूतैकभूताय भूतभूताय ते नमः ॥१८॥
प्रभूतभूतभूताय तुभ्यं भूतात्मने नमः ।
व्यक्त-प्रधान-पुरुष-विराट्-सम्राट्-स्वराट् तथा ॥१९॥
विभाव्यतेऽन्तःकरणैः पुरुषेष्वक्षयो भवान् ।
सर्वस्मिन् सर्वभूतस्त्वं सर्वसर्वस्वरूपधृक् ॥२०॥
सर्वं त्वत्तस्ततश्च त्वं सर्वात्मने नमोऽस्तु ते ।
सर्वात्मकोऽसि सर्वेश सर्वभूतस्थितो यतः ॥२१॥
कथयामि ततः किन्ते सर्वं वेत्सि हृदि स्थितम् ।
सर्वभूतो भवान् वेत्ति सर्वभूतमनोरथम् ॥२२॥

भगवानुवाच । सम्प्राप्तं त्वया तपसः फलं यदहं दृष्टः, परन्तु न मे दर्शनं विफल-मित्यतोऽभिमतं वरं वरय । ध्रुवः प्राह—

नैतद्राजासनं योग्यमजातस्य ममोदरात् ।
इति गर्वादवोचन्मां सपत्नी मातुरुच्चकैः ॥ १ ॥
आधारभूतं जगतः सर्वेषामुत्तमोत्तमम् ।
प्रार्थयामि प्रभो स्थानं त्वत्प्रसादादतोऽव्ययम् ॥२॥

किं वा सर्वजगत्स्रष्टः प्रसन्ने त्वयि दुर्लभम् ।
त्वत्प्रसादफलं भुंक्ते त्रैलोक्यं मघवानपि ॥३॥

इत्येवमर्थितो भगवानूचे । भवान् मत्प्रसादात् त्रैलोक्याधिके स्थाने सर्वताराग्रहाश्रयो भविष्यति । सूर्यादीनां ग्रहाणां सर्वर्क्षाणां सप्तर्षीणां ये वा वैमानिकाः सुरास्तेषां सर्वेषामुपरि स्थानं ते मया दत्तम् । केचित्सुराश्चतुर्युगं यावत् केचिच्च मन्वन्तरं यावत्तिष्ठन्ति । भवतस्तु मया कल्पसंस्थितिर्दत्ता । एवं त्वदीया माता सुनीतिरपि विमाने तारका भूत्वा तावत्कालमेव त्वदासन्ना निवत्स्यति । पुराऽन्यजन्मनि मय्यार्पितमनसो ब्राह्मणस्य ते यौवनेऽखिलभोगाढ्यो दर्शनीयोज्ज्वलाकृतिः कश्चन राजपुत्रो मित्रमभूत् । तत्सङ्गात्तस्य तां विशिष्टामृद्धिमवलोक्य अहं राजपुत्रो भवेयमित्यभिलषितं त्वया, अतोऽतिदुर्लभे उत्तानपादस्य गृहे गृहीतजन्मनस्ते राजपुत्रता जाता । ये चातः परं मानवाः सायं प्रातः समाहितास्त्वां कीर्तयिष्यन्ति तेषां महत्पुण्यं भविष्यति । इत्येवं लब्धवरो ध्रुवो वरं स्थानमध्यास्ते, तथा वाजिमेधेनोत्पन्ना धर्म्मस्य कन्या सूनृता नाम विश्रुता सुनीतिरपि ध्रुवसन्निहिता विराजति । तदेवमनयोर्म्मानवृद्धिं महिमानं च निरीक्ष्य देवासुराणामाचार्य्य उशनाः श्लोकं जगौ ।

अहोऽस्य तपसो वीर्य्यमहोऽस्य तपसः फलम् ।
यदेनं पुरतः कृत्वा ध्रुवं सप्तर्षयः स्थिताः ॥ १ ॥
ध्रुवस्य जननी चेयं सुनीतिर्नाम सूनृता ।
अस्याश्च महिमानं कः शक्तो वर्णयितुं भुवि ॥ २ ॥
यश्चैतत्कीर्तयेन्नित्यं ध्रुवस्यारोहणं दिवि ।
सर्वपापविनिर्मुक्तः स्वर्गलोके महीयते ॥ १ ॥
स्थानभ्रंशं न चाप्नोति दिवि वा यदि वा भुवि ।
सर्वकल्याणसंयुक्तो दीर्घकालं च जीवति ॥ २ ॥

॥ इति ध्रुवचरितं सम्पूर्णम् ॥

## ॥ इति वैज्ञानिकोपाख्यानं संपूर्णम् ॥

॥ श्रीः ॥

# * वैदिकोपाख्यानम् *

## ॥ मिथिलादेशोपाख्यानम् ॥

विदेघो ह माथवाऽग्निं वैश्वानरं मुखे बभार । तस्य गोतमो राहूगणऋषिः पुरोहित आस तस्मै ह स्मामन्त्र्यमाणो न प्रतिशृणोति । नेन्मेऽग्निर्वैश्वानरो मुखान्निष्पद्याता इति । तमृग्भिर्ह्व-यितुं दध्रे ।

"वीतिहोत्रं त्वा कवे द्युमन्तं समिधीमहि । अग्ने बृहन्तमध्वरे विदेघेति ।" स न प्रति-शुश्राव ।

"उदग्ने शुचयस्तव शुक्रा भ्राजन्त ईरते । तव ज्योतींष्यर्चयो विदेघेति ।" सह नैव प्रति-शुश्राव ।

"तं त्वा घृतस्नवीमहे—इत्येवाभिव्याहरत् । अथास्य घृतकीर्तावेवाग्निर्वैश्वानरो मुखा-दुज्जज्वाल । तन्न शशाक धारयितुम् । सोऽस्य मुखान्निष्पेदे । स इमां पृथिवीं प्रापादः ॥

तर्हि विदेधो माथव आस सरस्वत्याम् । स तत एव प्राङ्दहन्नभीयायेमां पृथिवीम् । तं गोतमश्च राहूगणो विदेघश्च माथवः पश्चाद्दहन्तमन्वीयतुः । स इमाः सर्वा नदीरतिददाह । सदानीरा—इत्युत्तराद् गिरेर्निर्धावति । तां हैव नातिददाह । तां ह स्म तां पुरा ब्राह्मणा न तरन्ति-अनतिदग्धा ह्यग्निना वैश्वानरेणेति । तत एतर्हि प्राचीनं बहवो ब्राह्मणाः । तद्धा क्षेत्रतरमिवास, स्रावितरमिव, अस्वदितमग्निना वैश्वानरेणेति । तदुहैतर्हि क्षेत्रतरमिव । ब्राह्मणा उ हि नूनमे-नद् यज्ञैरसिष्वदन । सापि जघन्ये नैदाघे समिवैव कोपयति । तावच्छीताऽनतिदग्धा ह्यग्निना

वैश्वानरेण । स होवाच विदेघो माथवः क्वाहं भवानीति ॥ अतएव ते प्राचीन भुवनमिति होवाच । सैषाप्येतर्हि कोसलविदेहानां मर्य्यादा । ते हि माथवा. ॥

अथ होवाच- गोतमो राहूगणः । कथं नु न आमन्त्र्यमाणो न प्रत्यश्रौषीरिति । स होवाच । अग्निर्मे वैश्वानरो मुखेऽभूत् । स नेन्मे मुखान्निष्पद्यातै । तस्मात् तेन प्रत्यश्रौषमिति । तदु कथमभूदिति । यत्रैव त्वं—' घृतस्नवीमहे" इत्यभिव्याहार्षीः- तदेव मे घृतकीर्तावग्नि- वैश्वानरो मुखादुदज्वालीत् । तं नाशकं धारयितुम् । स मे मुखान्निरपादीति ॥

| | का॰ | प्र॰ | ब्रा॰ | क. | पृ. |
|---|---|---|---|---|---|
| शत — | १ | ३ | ३ | १०-१६ | २७ |

# ॥ असुरघ्नी सपत्नघ्नी वाक् ॥

मनोर्ह वा ऋषभ आस । तस्मिन्नसुरघ्नी सपत्नघ्नी वाक् प्रविष्टाऽऽस । तस्य ह स्म श्वसथाद् रवथादसुररक्षसानि मृद्यमानानि यन्ति ते हासुराः समूदिरे-पापं वत नोऽयमृषभ. सचते । कथं न्विमं दभ्नुयामेति । किलाताकुली इति हासुरब्रह्मावासतुः । तौ होचतु-श्रद्धा देवो वै मनुरावं- नु वेदावेति । तौ हागत्योचतुः-मनो याजयाव त्वेति । केनेति । अनेन ऋषभेणेति । तथेति । तस्यालब्धस्य वागपचक्राम ॥ सा मनोरेव जायां मनावीं प्रविवेश । तस्यै ह स्म यत्र वदन्त्यै शृण्वन्ति । ततो ह स्मैवासुररक्षसानि मृद्यमानानि यन्ति । तेहासुराः समूदिरे । इतो वै नः पापीयः सचते ॥ भूयो हि मानुषी वाग् वदतीति । किलाताकुली हैवोचतुः । श्रद्धादेवो वै मनुरावं न्वेव वेदावेति । तौ हागत्योचतुः मनो याजयाव त्वेति । केनेति । अनयैव जाययेति । तथेति । तस्या आलब्धायै सा वागपचक्राम । सा यज्ञमेव यज्ञपात्राणि प्रविवेश । ततो हैनां न शेकतु निर्हन्तुम् । सैषाऽसुरघ्नी वागुद्वदति ॥ स यस्य हैवंविदुष एतामत्र वाचं प्रत्युद्वायदन्ति- पापीयांसो हैवास्य सपत्ना भवन्ति ॥ शतः १ का॰ । १ प्र॰ । ४ ब्रा॰ । १४-१७ कं॰ । पृ॰ ७)

# ॥ अग्निदूतोपाख्यानम् ॥

देवाश्च वा असुराश्च-उभये प्राजापत्याः पस्पृधिरे । तान् स्पर्धमानान् गायत्री अन्तरा- तस्थौ । या वै सा गायत्री आसीद्-इयं वै सा पृथिवी । इयं हैव तदन्तरा तस्थौ । त उभये एव विदांचक्रुः-यतरान्वै न इयमुपावर्त्स्यति-ते भविष्यन्ति । परेतरे भविष्यन्तीति । तामुभय एवोपमन्त्रयाञ्चक्रिरे । अग्निरेव देवानां दूत आस । सहरक्षा इत्यसुररक्षसामसुराणाम् । साग्निमेवानुप्रेयाय । तस्मादन्वाह-अग्निं दूतं वृणीमहे-इति । शत का॰ १ । प्र॰ ३ । ब्रा॰ ३ । क॰ ३४ । पृष्ठ २८ । )

# ॥ आप्त्योपाख्यानम् ॥

चतुर्धा विहितो ह वा अग्रेऽग्निरास । स यमग्रेऽग्निं होत्राय प्रावृणत स प्राधन्वत् । यं द्वितीयं प्रावृणत-स प्रैवाधन्वत् यं तृतीयं प्रावृणत स प्रैवाधन्वत । अथ योऽयमेतर्ह्यग्निः स भीषा निलिल्ये । सोऽपः प्रविवेश । त देवा अनुविद्य सहसैवाद्भ्य आनिन्युः । सोऽपोऽभितिष्ठेवावष्ठ्यूताः स्थ । या अप्रपदनं स्थ । याभ्यो वो मामकामं नयन्तीति । तत आप्त्याः संबभूवुः – त्रितो द्वित एकतः । त इन्द्रेण सह चेरुः । यथेदं ब्राह्मणो राजानमनुचरति ॥ स यत्र त्रिशीर्षाणं त्वाष्ट्रं विश्वरूपं जघान । तस्य हैतेऽपि वध्यस्य विदाञ्चक्रुः । शश्वद्धैनं त्रित एव जघान । अत्यह तदिन्द्रोऽमुच्यत । देवो हि सः । त उ हैत ऊचुः । उपैवेम एनो गच्छन्तु— येऽस्य वध्यस्यावेदिषुरिति । किमिति यज्ञ एवैषु मृष्टामिति । तदेष्वेतद् यज्ञो मृष्टे । यदेभ्यः पात्रीनिर्णेजनमङ्गुलिप्रणेजनं निनयन्ति ॥ त उ हाप्त्या ऊचुः ॥ अत्येव वयमिदमस्मत्परो नयामेति ॥ कमभीति । य एवादक्षिणेन हविषा यजाता इति । तस्मान्नादक्षिणेन हविषा यजेत । आप्त्येषु ह यज्ञो मृष्टे । आप्त्या उ ह तस्मिन् मृजते । योऽदक्षिणेन हविषा यजते । ततो देवा एतां दर्शपूर्णमासयोर्दक्षिणामकल्पयन्-यदन्वाहार्य्यम् । नेददक्षिणं हविरसदिति । तन्नाना निनयति तथैभ्योऽसमदं करोति । तदभितपति । तथैषां शृतं भवति । स निनयति-त्रिताय त्वा, द्विताय त्वा, एकताय त्वेति ॥ शत० १ कां० । २ प्र० । १ ब्रा० । १-४ क० । १२ पृ० ।)

# ॥ पशुमेधापक्रमः ॥

पुरुषं ह वै देवा अग्रे पशुमालेभिरे । तस्यालब्धस्य मेधोऽपचक्राम ।
सोऽश्वं प्रविवेश । तेऽश्वमालभन्त । तस्यालब्धस्य मेधोपचक्राम ।
स गां प्रविवेश । ते गामालभन्त । तस्या आलब्धाया मेधोऽपचक्राम ।
सोऽविं प्रविवेश । तेऽविमालभन्त । तस्यालब्धस्य मेधोपचक्राम ।
सोऽजं प्रविवेश । तेऽजमालभन्त । तस्यालब्धस्य मेधोपचक्राम ।
स इमां पृथिवीं प्रविवेश ॥ तं खनन्त इवान्वीयुः । तमन्वविन्दन् ।

ताविमौ व्रीहियवौ । तस्मादप्येतावेतर्हि खनन्त इवैवानुविन्दन्ति । स यावद् वीर्यवद्ध वा अस्यैते सर्वे पशव आलब्धाः स्युः, तावद्वीर्यवद्धास्य हविरेव भवति य एवमेतद्वेद । अत्रो सा सम्पत्-यदाहुः- पाङ्क्तः पशुरिति । पिष्टानि लोमानि । आपस्त्वक् । यदा संयौति तन्मांसम् । यदा शृतोऽथास्थि । यद्दुद्वासयिष्यन्नभिघारयति तं मज्जानं दधाति । एषो सा सम्पत्-यदाहुः पाङ्क्तः पशुरिति ।

स यं पुरुषमालभन्त स किंपुरुषोऽभवत्। यमश्वं गां चालभन्त तौ गौरश्च गवयश्चाभवताम्। यमविं स उष्ट्रोऽभवत्। यमजं स शरभः। तस्मादेतेषां पशूनां नाशितव्यम्। अपक्रान्तमेधा ह्येते पशवः। (शत: १ का० । २ प्र० । १ ब्रा० । ६-६ क । १० पृ०)

इन्द्रो ह वा यत्र वृत्राय वज्रं प्रजहार। स प्रहृतश्चतुर्धाऽभवत्-तस्य स्फ्यस्तृतीयं वा यावद्वा। यूपस्तृतीयं वा यावद्वा। रथस्तृतीयं वा यावद्वा। अथ यत्र प्राहरत्- तच्छकलोऽशीर्य्यत। स पतित्वा शरोऽभवत्। तस्माच्छरो नाम यदशीर्य्यत एवमु स चतुर्धा वज्रोऽभवत्। ततो द्वाभ्यां ब्राह्मणा यज्ञे चरन्ति। द्वाभ्यां राजन्यबन्धवः संव्याधे। यूपेन च स्फ्येन च ब्राह्मणाः। रथेन च शरेण च राजन्यबन्धवः। स यत् स्फ्यमादत्ते यथैव तदिन्द्रो वृत्राय वज्रमुदयच्छत् एवमेवैष एतं पाप्मने द्विषते भ्रातृव्याय वज्रमुद्यच्छति। वज्रो वा एष। तस्य न मनुष्यो भर्ता। तमेताभिर्देवताभिरादत्ते। ( शत १ का० । २ प्र० । २ ब्रा० । १-३ क । १० पृ०)

## ॥ स्तम्बयजुरुपाख्यानम् ॥

देवाश्च वा असुराश्चोभये प्राजापत्याः पस्पृधिरे। ते ह स्म यद्देवा असुरान् जयन्ति ततो ह स्मैवैनान् पुनरुपोत्तिष्ठन्ति। कथं न्वेनानपजय्यं जयेमेति। स हाग्निरुवाच। उदञ्चो वै नः पलाय्य मुच्यन्ते इति। उदञ्चो ह स्मैवैषां पलाय्य मुच्यन्ते। स हाग्निरुवाच। अहमुत्तरतः पर्य्येष्यामि। अथ यूयमित उपसंरोत्स्यथ। तान् संरुध्यैभिश्च लोकैरभिनिधास्यामो यदु चेमान् लोकानति चतुर्थम्। तत पुनर्न संह्वास्यन्त इति। सोऽग्निरुत्तरतः पर्य्यैत्। अथेम इत उपसमरुन्धन् तान् संरुध्यैभिश्च लोकैरभिन्यदधुः। यदु चेमान् लोकानति चतुर्थम्। ततः पुनर्न समजिहत। तदेतन्निदानेन यत स्तम्बयजुः। स योऽसावग्नीदुत्तरतः पर्य्येति अग्निरेवैतन्निदानेन। तानध्वर्युरेवेत उपसंरुणद्धि। तान् संरुध्यैभिश्च लोकैरभिनिदधाति। यद्दु चेमान् लोकानति चतुर्थम्। ततः पुनर्न संजिहते। तस्मादप्येतर्ह्यसुरा न संजिहते। येन ह्येवैनान् देवा अवाबाधन्त तेनैवैनानप्येतर्हि ब्राह्मणा यज्ञेऽवबाधन्ते। य उ एव यजमानस्यारातीयति यश्चैवं द्वेष्टि तमेवैतदेभिश्च लोकैरभिनिदधाति यदु चेमान् लोकानति चतुर्थमस्या एव सर्वं हरति। अस्यां हीमे सर्वे लोकाः प्रतिष्ठिताः। किं हि हरेद्-यदन्तरिक्षं हरामि। दिवं हरामीति हरेत्। तस्मादस्या एव सर्वं हरति।
( शत: १का० । २ प्र० । २ ब्रा० ७-१४ क० । पृ० १४ )

## ॥ पृथ्वीविभागोपाख्यानम् ॥

देवाश्च वा असुराश्च उभये प्राजापत्याः पस्पृधिरे ततो देवा अनुव्यमिवासुरथ हासुरा मेनिरेऽस्माकमेवेदं खलु भुवनमिति। ते होचु हन्तेमां पृथिवीं विभजामहै तां विभज्योपजी-

वामेति । तमौद्गणैश्चर्मभिः, पश्चात् प्राञ्चो विभजमाना अभीयुः । तद्वै देवाः शुश्रुवुः । विभजन्ते ह वा इमामसुराः पृथिवीं प्रेत तदेष्यामो यत्रेमामसुरा विभजन्ते, के तत स्याम यदस्यै न भजेमहीति ते यज्ञमेव विष्णुं पुरस्कृत्येयुः । ते होचुः । अनु नोऽस्यां पृथिव्यामाभजतास्त्वे नोऽप्यस्यां भाग इति । ते हासुरा असूयन्त इवोचुर्यावदेवैष विष्णुरभिशेते तावद्वो दद्म इति । वामनो ह विष्णुरास । तद्देवा न जिहीडिरे महद्वै नोऽदुर्ये नो यज्ञसम्मितमदुरिति ते प्राञ्चं विष्णुं निपाद्य छन्दोभिरभितः पर्यगृह्णन्, गायत्रेण त्वा छन्दसा परिगृह्णामीति दक्षिणतः त्रैष्टुभेन त्वा छन्दसा परिगृह्णामीति पश्चाज्जागतेन त्वा छन्दसा परिगृह्णामीत्युत्तरतः । तं छन्दोभिरभितः परिगृह्य, अग्निं पुरस्तात् समाधाय तेनार्चन्तः श्राम्यन्तश्चेरुस्तेनेमां सर्वां पृथिवीं समविन्दन्त । तद्यदेनेनेमां सर्वां समविन्दन्त तस्माद्वेदिर्नाम । तस्मादाहुर्यावती वेदिस्तावती पृथिवीत्येतया हीमां सर्वां समविन्दन्तैव ह वा इमां सर्वां सपत्नानां संवृङ्क्ते निर्भजत्यस्यै सपत्नान् य एवमेतद्वेद । सोऽयं विष्णुर्ग्लानः । छन्दोभिरभितः परिगृहीतोऽग्निः पुरस्तान्नापक्रमणमास स तत एवौषधीनां मूलान्युपमुम्लोच । ते ह देवा ऊचुः । क्व नु विष्णुरभूत् । क्वनु यज्ञोऽभूदिति । ते होचुश्छन्दोभिरभितः परिगृहीतोऽग्निः पुरस्तान्नापक्रमणमस्त्यत्रैवान्विच्छतेति, तं खनन्त इवान्वीयुस्तं त्र्यङ्गुलेऽन्वविन्दंस्तस्मात् त्र्यङ्गुला वेदिः स्यात्तदु हापि पाञ्चिस्त्र्यङ्गुलामेव सौम्यस्याध्वरस्य वेदिं चक्रे । तदु तथा न कुर्यात् । ओषधीनां वै स मूलान्युपाम्लोचत्तस्मादोषधीनामेव मूलान्युच्छेत्तवै ब्रूयाद्यन्न्वेवात्र विष्णुमन्वविन्दंस्तस्माद्वेदिर्नाम । शत: १का० । २ प्र० । ३ ब्रा० । १-१० क० । पृ० १५

# ॥ देवयजनोपाख्यानम् ॥

'देवा ह वै संग्रामं सन्निधास्यन्तस्ते होचुर्हन्त यदस्यै पृथिव्या अनामृतं देवयजनं तच्चन्द्रमसि निदधामहै स यदि नऽइतोऽसुरा जयेयुस्तत एवार्चन्तः श्राम्यन्तः पुनराभवेमेति । स यदस्यै पृथिव्याऽअनामृतं देवयजनमासीत्तच्चन्द्रमसि कृष्णं तस्मादाहुश्चन्द्रमस्यस्यै पृथिव्यै देवयजनम्" इति । अपि हवाऽअस्यैतस्मिन् देवयजन ऽ इष्टं भवति तस्माद्वै प्रतिमार्ष्टि— "पुरा क्रूरस्य विसृपो विरप्शिन' इति । संग्रामो वै क्रूरं, सङ्ग्रामे हि क्रूरं क्रियते हतः पुरुषो हतोऽश्वः शेते, पुरा ह्येतत् संग्रामान्न्यदधत तस्मादाहुः'पुरा क्रूरस्य विसृपो विरप्शिन्, इति ।

"उदादाय पृथिवीं जीवदानुम्" इति । उदादाय हि यदस्यै पृथिव्यै जीवमासीत् तच्चन्द्रमसि न्यदधत तस्मादाह 'उदादाय पृथिवीं जीवदानुम्' । इति ।

"यामैरयंश्चन्द्रमसि स्वधाभिः" इति- यां चन्द्रमसि ब्राह्मणा दधुरित्येवैतदाह ।

"तामु धीरासोऽनुदिश्य यजन्त" इति । एतेनो ह तामनुदिश्य यजन्तोऽपि ह वाऽअस्यैतस्मिन्देवयजनऽ इष्टं भवति य एवमेतद्वेद ।

ते ह स्मावमर्शं यजन्ते ते पापीयांस आसुरथ ये नेजिरे ते श्रेयांस आसुस्ततोऽश्रद्धा मनुष्यान् विवेद ये यजन्ते पापीयांसस्ते भवन्ति य उ न यजन्ते श्रेयांसस्ते भवन्तीति तत इतो देवान् हविर्न जगामेतः प्रदानाद्धि देवा उपजीवन्ति । ते ह देवा ऊचुः बृहस्पतिमाङ्गिरसम्, अश्रद्धा वै मनुष्यानविदत्तेभ्यो विधेहि यज्ञमिति । स हेत्योवाच बृहस्पतिराङ्गिरसः कथा न यजध्वऽइति । ते होचुः किङ्काम्या यजेमहि ये यजन्ते पापीयांसस्ते भवन्ति य ऽ उ न यजन्ते श्रेयांसस्ते भवन्तीति । स होवाच बृहस्पतिराङ्गिरसो यद्वै शुश्रुम देवानां परिपूतं तदेव यज्ञो भवति यच्छृतानि हवींषि क्लृप्ता वेदिस्तेनावमर्शमचारिष्ट तस्मात् पापीयांसोऽभूत । तेनानवमर्शं यजध्वं तथा श्रेयांसो भविष्यथेत्या कियत इत्याबर्हिषस्तरणादि'त बर्हिषा ह वै खल्वेषा शाम्यति ! ( शत: १ का० । २ प्र० । ३ ब्रा० ।१८-१६, २४-२६ क० । पृ० १६, १७। )

## ॥ वाङ्मनसोपाख्यानम् ॥

प्रथमेऽआहुती जुहोति मनसे चैव वाचे च । मनश्च हैव वाक च युजौ देवेभ्यो यज्ञं वहतः । ( शत: का० १ । प्र० ३ । ब्रा० ६ । क० १ । पृ० ३२ । )

देवा ह वै यज्ञं तन्वानाः । तेऽसुररक्षसेभ्य आसङ्गाद्बिभयांचक्रुः । तऽएतद्दक्षिणतः प्रत्युदश्रयन् । उच्छ्रितमिव हि वीर्यम् । तस्माद्दक्षिणतस्तिष्ठन्नाघारयति । स यदुभयत आघारयति तस्मादिदं मनश्च वाक् च समानमेव सन्नानेव । शिरो ह वै यज्ञस्यै तयोरन्यतर: आघारयोर्मूलमन्यतरः । स्रुवेण तमाघारयति यो मूलं यज्ञस्य । स्रुचा तमाघारयति यः शिरो यज्ञस्य । तूष्णीं तमाघारयति यो मूलं यज्ञस्य । तूष्णीमिव हीदं मूलम् । नो ह्यत्र वाग् वदति । मन्त्रेण तमाघारयति यः शिरो यज्ञस्य । वाग्धि मन्त्रः । शीर्ष्णो हीयमधि वाग् वदति । आसीनस्तमाघारयति यो मूलं यज्ञस्य । निषण्णमिव हीदं मूलम् । तिष्ठंस्तमाघारयति यः शिरो यज्ञस्य । तिष्ठतीव हीदं शिरः । ( शत १ का० । ३ प्र० । ६ ब्रा० । ८-१२ क० । पृ० ३३ )

अथातो मनसश्चैव वाचश्च अहम्भद्र उदितम् । मनश्चैव वाक् चाहम्भद्रऽऊदाते । तद्ध मन उवाच । अहमेव त्वच्छ्रेयोऽस्मि । न वै मया त्वं किंचनानभिगतं वदसि । यन्मम त्वं

कृतानुकरानुवर्त्मासि । अहमेव त्वच्छ्रेयोऽस्मीति । अथ ह वागुवाच । अहमेव त्वच्छ्रेयस्यस्मि । यद्वै त्वं वेत्थाहं तद्विज्ञापयामि । अहं संज्ञपयामीति । ते प्रजापतिं प्रतिप्रश्नमेयतुः । स प्रजापतिर्मनसऽएवानूवाच । मन एव त्वच्छ्रेयः । मनसो वै त्वं कृतानुकरानुवर्त्मासि । श्रेयसो वै पापीयान् कृतानुकरोऽनुवर्त्मा भवतीति । सा ह वाक् परोक्ता विसिष्मिये । तस्यै गर्भः पपात । सा ह वाक् प्रजापतिमुवाच । अहव्यवाडेवाहं तुभ्यं भूयासम् यां मा परोवाच इति । तस्माद्यत् किञ्च प्राजापत्यं यज्ञे क्रियतऽउपांश्वेव तत् क्रियते । अहव्यवाड्ढि वाक् प्रजापतयऽआसीत् । तद्वै तद्देवाः । रेतश्चर्मन्वा यस्मिन्वा बभ्रुस्तद्धस्म पृच्छन्ति । अत्रेव त्या ३ विति । ततोऽत्रिः संबभूव । तस्मादप्यात्रेय्या योषितैनस्व्यै हि योषायै वाचो देवताया एते संभूताः । शत १ का० । ४ प्र० । १ ब्रा० । ८-१३ क० । पृ० ३४)

देवाश्च वा असुराश्च । उभये प्राजापत्याः पस्पृधिरे । ते दण्डैर्धनुर्भिर्न व्यजयन्त । ते हाविजयमानाः ऊचुः हन्त वाच्येव ब्रह्मन् विजिगीषामहै । स यो नो वाचं व्याहृतां मिथुनेनानुविक्रमात्स सर्वं पराजयाता ऽ अथ सर्वमितरे जयानिति । तथेति देवा अब्रुवन् । ते देवाऽइन्द्रमब्रुवन् व्याहरेति । स इन्द्रोऽब्रवीत् । एको ममेति । अथास्माकमेकेतीतरेऽब्रुवन् । तदु तन्मिथुनमेवाविन्दन् । मिथुनं ह्येकश्चैका च । द्वौ ममेति इन्द्रोऽब्रवीत् । अथास्माकं द्वे इतीतरेऽब्रुवन् । तदु तन्मिथुनमेवाविन्दन् । मिथुनं हि द्वौ च द्वे च । त्रयो ममेति-इन्द्रोऽब्रवीत् । अथास्माकं तिस्र इतीतरेऽब्रुवन् । तदु तन्मिथुनमेवाविन्दन् । मिथुनं ह त्रयश्च तिस्रश्च । चत्वारो ममेति इन्द्रोऽब्रवीत् । अथास्माकं चतस्र इतीतरेऽब्रुवन् । तदु तन्मिथुनमेवाविन्दन् । मिथुनं हि चत्वारश्च चतस्रश्च । पञ्च ममेति-इन्द्रोऽब्रवीत् । तत इतरे मिथुनं नाविन्दन् । नो ह्यत ऊर्ध्वं मिथुनमस्ति । पञ्च पञ्च इति ह्येवैतदुभयं भवति । ततोऽसुराः सर्वे पराजयन्त । सर्वस्मा देवाऽअसुरानजयन् । सर्वस्मात् सपत्नानसुरान्निरभजन् । तस्मात् प्रथमे प्रयाजऽइष्टे ब्रूयात् । एको ममेति । एका तस्य यमहं द्वेष्मीति । यद्यु न द्विष्याद्योऽस्मान् द्वेष्टि यं च वयं द्विष्म इति ब्रूयात् । द्वौ ममेति-द्वितीये प्रयाजे द्वे तस्य योऽस्मान् द्वेष्टि यं च वयं द्विष्म इति । त्रयो ममेति- तृतीये प्रयाजे । तिस्रस्तस्य योऽस्मान् द्वेष्टि यं च वयं द्विष्म इति । चत्वारो ममेति-चतुर्थे प्रयाजे । चतस्रस्तस्य योऽस्मान् द्वेष्टि यं च वयं द्विष्म इति । पञ्च ममेति-पञ्चमे प्रयाजे न तस्य किञ्चन योस्मान् द्वेष्टि यं च वयं द्विष्मः । स पञ्च पञ्चेत्येव भवन् पराभवति । तथास्य सर्वं संवृङ्क्ते सर्वस्मात् सपत्नान्निर्भजति य एवमेतद्वेद । (शत १ का० । ४ प्र० । ५ ब्रा० । क० ६-१६ । पृ० ४१)

# ॥ ऋतुयज्ञोपाख्यानम् ॥

ऋतवो ह देवेषु यज्ञे भागमीषिरे । आ नो यज्ञे भजत । मा नो यज्ञादन्तर्गतास्त्वेव नोऽपि यज्ञे भाग इति । तद्वै देवा न जज्ञुः । तऽऋतवो देवेष्वजानत्स्वसुरानुपावर्तन्त प्रियान्देवानां द्विषतो भ्रातृव्यान् । ते हैतामेधतुमेधांचक्रिरे । यामेषामेतामनुशृण्वन्ति कृषन्तो ह स्मैव पूर्वे वपन्तो यन्ति, लुनन्तोऽपरे, मृणन्तः शश्वद्धैभ्योऽकृष्टपच्या एवौषधयः पेचिरे ॥ तद्वै देवानामाग आस । कनीय इन्वतो द्विषन् द्विषतेऽरातीयति । किम्वेतावन्मात्रमुपजानीत यथेदमितोऽन्यथा सदिति ॥ ते होचुः । ऋतूनेवानुमन्त्रयामहाऽइति । केनेति । प्रथमानेवैनान्यज्ञे यजामेति ॥ स हाग्निरुवाच ॥ अथ यन्मां पुरा प्रथमं यजथ क्वाहं भवानीति । न त्वामायतनाच्च्यावयाम इति । ते यदृतूनभिहूयमाना अथाग्निमायतनान्नाच्यावयन् । तस्मादग्निरच्युतः न हवाऽआयतनाच्च्यवते यस्मिन्नायतने भवति, य एवमेतमग्निमच्युतं वेद ॥ ते देव अग्निमब्रुवन् । परे ह्येनास्त्वमेवानुमन्त्रस्वेति । स हेत्याग्निरुवाच । ऋतवोऽविदं वै वो देवेषु यज्ञे भागमिति । कथंनोऽविद इति । प्रथमानेव वो यज्ञे यक्ष्यन्तीति ॥ तऽऋतवोऽग्निमब्रुवन् । आ वयं त्वामस्मासु भजामो यो नो देवेषु यज्ञे भागमविद इति । स एषोऽग्निर्ऋतुष्वाभक्तः । समिधोऽग्ने तनूनपादग्ने, इडोऽग्ने, बर्हिरग्ने, स्वाहाग्निमित्याभक्तो ह वै तस्यां पुण्यकृत्यायां भवति यामस्य समानो ब्रुवाणः करोति । अग्निमते हवाऽस्मस्यै अग्निमन्त ऋतव ओषधीः पचन्तीदं सर्वं य एवमेतमग्निमृतुष्वाभक्तं वेत ॥ तदाहुः । यदुत्तमान्प्रयाजानावाहयन्ति । अथ कस्मादेनान्प्रथमान्यजन्तीति । उत्तमान्ह्येनान्यज्ञेऽवाकल्पन्प्रथमान्वो यजामेत्यब्रुवन् । तस्मादुत्तमानावाहयन्ति प्रथमान्यजन्ति ॥ चतुर्थेन वै प्रयाजेन देवा यज्ञमाप्नुवन् । तं पञ्चमेन समस्थापयन् । अथ यदत ऊर्ध्वमसंस्थितं यज्ञस्य स्वर्गमेव तेन लोकं समाश्नुवत ॥ ते स्वर्गलोकं यन्तः असुररक्षेभ्य आसङ्गाद्बिभयाञ्चक्रुः । तेऽग्निं पुरस्तादकुर्वत रक्षोहणं रक्षसामपहन्तारम् । अग्निं मध्यतोऽकुर्वत रक्षोहणं रक्षसामपहन्तारम् । अग्निं पश्चादकुर्वत रक्षोहणं रक्षसामपहन्तारम् ॥ स यद्येनान्पुरस्तात् असुररक्षसान्यासिसंक्षन्नग्निरेव तान्यपाहन् रक्षोहा रक्षसामपहन्ता यदि मध्यत आसिसंक्षन्नग्निरेव तान्यपाहन् रक्षोहा रक्षसामपहन्ता । यदि पश्चादासिसंक्षन्नग्निरेव तान्यपाहन् रक्षोहा रक्षसामपहन्ता । त एवं सर्वतोऽग्निभिर्गुप्यमानाः स्वर्गं लोकं समाश्नुवत ॥ तथोऽएवैष एतत चतुर्थेनैव प्रयाजेन यज्ञमाप्नोति । त पञ्चमेन संस्थापयति । अथ यदत ऊर्ध्वमसंस्थितं यज्ञस्य स्वर्गमेव तेन लोकं समश्नुते ॥ स यदाग्नेयमाज्यभागं यजति । अग्निमेवैत पुरस्तात् कुरुते रक्षोहणं रक्षसामपहन्तारम् । अथ यदग्निं स्विष्टकृत

यजन्ति अग्निमेवैतत् पश्चात् कुरुते रक्षोहणं रक्षसामपहन्तारम् ॥ स यद्येतं पुरस्तात्–असुररक्षसान्यासिसंक्षन्त्यग्निरेव तान्यपहन्ति रक्षोहा रक्षसामपहन्ता। यदि मध्यत असुररक्षसान्यासिसंक्षन्त्यग्निरेव तान्यपहन्ति रक्षोहा रक्षसामपहन्ता । यदि पश्चादसुररक्षसान्यासिसंक्षन्त्यग्निरेव तान्यपहन्ति रक्षोहा रक्षसामपहन्ता । स एवं सर्वतोऽग्निभिर्गुप्यमानः स्वर्गलोकं समश्नुते ॥ स यद्येवं पुरस्तात्–यज्ञस्यानुव्याहरेत्। तं प्रतिब्रूयात् मुख्यामार्तिमारिष्यस्यन्धो बधिरो वा भवष्यसीति । एता वै मुख्या आर्तयः । तथा हैव स्यात् ॥ यदि मध्यतो यज्ञस्यानुव्याहरेत् । तं प्रतिब्रूयात् । अप्रजा अपशुर्भविष्यसीति । प्रजा वै पशवो मध्यम् । तथा हैव स्यात् ॥ यद्य ततो यज्ञस्यानुव्याहरेत्। तं प्रतिब्रूयाद् प्रतिष्ठितो दरिद्रः क्षिप्रेऽमुं लोकमेष्यसीति । तथा हैव स्यात् । तस्मादुह नानुव्याहारीव स्यात् । त इत्येवंवित् परो भवति ॥ संवत्सरं हवै प्रयाजैर्जयं यजति । स ह न्वेवैनं जयति योऽस्य द्वाराणि वेद । किं हि स तैर्गृहैः कुर्य्याद्यानन्तरतो न व्यववियाद्-यथास्य ते भवन्ति । तस्य वसन्त एव द्वारं, हेमन्तो द्वारं, तं वाऽएतं संवत्सरं स्वर्गलोकं प्रपद्यते । सर्वं वै संवत्सरः, सर्वं वाऽक्षय्यमेतेन हास्याक्षय्यं सुकृतं भवति । अक्षय्यो लोकः ॥ ( शत० १ का० । ४ प्र० । ६ ब्रा० । १-१८ क० । पृ० ४२-४३ )

## ॥ यज्ञयूपोपाख्यानम् ॥

यज्ञेन वै देवा इमां जितिं जिग्युर्येषामियं जितिः । ते होचुः । कथन्न इदं मनुष्यरनभ्यारोह्यं स्यादिति ते यज्ञस्य रसं धीत्वा यथा मधु मधुकृतो निर्धयेयुर्विदुह्य यज्ञं यूपेन योपयित्वा तिरोऽभवन् । अथ यदेनेनायोपयंस्तस्माद्यूपो नाम । तद्वाऽऋषीणामनुश्रुतमास ॥ यज्ञेन ह वै देवा इमां जितिं जिग्युर्येषामियं जितिः । ते होचुः । कथं न इदं मनुष्यैरनभ्यारोह्यं स्यादिति । ते यज्ञस्य रसं धीत्वा यथा मधु मधुकृतो निर्द्धयेयुर्विदुह्य यज्ञं यूपेन योपयित्वा तिरोऽभवन्निति । तमन्वेष्टुं दध्रिरे ॥ तेऽर्चन्तः श्राम्यन्तश्चेरुः । श्रमेण ह स्म वै तद्देवा जयन्ति यदेषां जय्यमासऽर्षयश्च । तेभ्यो देवा वैव प्ररोचयाञ्चक्रुः । स्वयं वैव दध्रिरे । प्रेत तदेष्यामो यतो देवाः स्वर्गलोकं समाश्नुवतेति । ते किं प्ररोचते किं प्ररोचतऽइति चेरुः । एतत्पुरोडाशमेव कूर्म्मं भूत्वा सर्प्पन्तं । ते ह सर्वऽएव मेनिरेऽयं वै यज्ञ इति ॥ ( शतः १ का० । ५ प्र० । १ ब्रा । १-३ क० । पृ० ४३-४४ । )

## ॥ त्वाष्ट्र-विश्वरूपोपाख्यानम् ॥

त्वष्टुर्ह वै पुत्रः । अग्नीषोमीय उपांशुयाजः त्रिशीर्षा षडक्ष आस । तस्याः त्रीण्येव

मुखान्यासुः तद्यदेवंरूप आस तस्माद्विश्वरूपोनाम ॥ आवापः प्रधानकर्म्म । तस्य सोमपानमेवैकं मुखमास । सुरापाणमेकम् । अन्यस्माऽअशनायैकम् । तमिन्द्रोदिद्वेष । तस्य तानि शीर्षाणि प्रचिच्छेद ॥ स यत्सोमपानमास ततः कपिञ्जलः समभवत् । तस्मात्स बभ्रुकइव बभ्रुरिव हि सोमो राजा ॥ अथ यत्सुरापाणमास । ततः कलविङ्कः समभवत् । तस्मात्सोभिमाद्यत्क इव वदति अभिमाद्यन्निव हि सुरां पीत्वा वदति । अथ यदन्यस्माऽअशनायास ततस्तित्तिरिः समभवत् तस्मात्स विश्वरूपतम-इव सन्त्येव, घृतस्तोका-इव, त्वन्मधुस्तोका-इव । त्वत्पर्णेष्वाश्चुतिताः । एवंरूपं हि स तेनाशनमावयत् ॥ स त्वष्टा चुक्रोध । कुविन्मे पुत्रमवधीदिति । सोपेन्द्रमेध सोममाजह्रे । स यथायं सोमः प्रसुत एवमपेन्द्र एवास ॥ इन्द्रो ह वा ऽईक्षाञ्चक्रे इदं वै मा सोमादन्तयन्तीति । स यथा बलीयानबलीयस एवमनुपहूत एव यो द्रोणकलशे शुक्र आस तं भक्षयाञ्चकार । स हैनं जिहिंस । सोऽस्य विष्वङ्ङेव प्राणेभ्यो दुद्राव मुखाद्धैवास्य न दुद्राव अथ सर्वेभ्योऽन्येभ्यः प्राणेभ्यो ऽद्रवत् तदद: सौत्रामणीतीष्टिःस्तस्यां तद् व्याख्यायते यथैनं देवा अभिषज्यन् ॥ स त्वष्टा चुक्रोध । कुविन्मेऽनुपहूतः सोममवभक्षदिति । स स्वयमेव यज्ञवेशसं चक्रे । स यो द्रोणकलशे शुक्रः परिशिष्ट आस तं प्रवर्तयाञ्चकार । इन्द्रशत्रुर्वर्द्धस्वेति । सोऽग्निमेव प्राप्य सम्बभूवांतरैव सम्बभूवइत्युहैकऽआहुः । सोऽग्नीषोमावेवाभिसम्बभूव । सर्वा विद्याः सर्वं यशः सर्वमन्नाद्यं सर्वां श्रीम् । स यद्वर्तमानः समभवत् तस्मात् वृत्रः अथ यदपात समभवत्तस्मादहिस्तं दनुश्च दनायूश्च मातेव च पितेव च परिजगृहतुः तस्माद्दानव इत्याहु ॥ अथ यदब्रवीद् इन्द्रशत्रुर्वर्द्धस्वेति । तस्मादु हैनमिन्द्र एव जघान अथ यद्ध शश्वद्-वदयदिन्द्रस्य शत्रुवर्द्धस्वेति । शश्वदुह स एवेन्द्रमहनिष्यत् ॥ अथ यदब्रवीद्-वर्द्धस्वेति । स्मादु ह स्मेषुमात्रमेव तिर्य्यङ् वर्द्धते । इषुमात्रं प्राङ् । सोऽवैवावरं समुद्रं दधावपूर्वं । स यावत्स आस सहैव तावदन्नाद आस ॥ तस्मै ह स्म पूर्वाह्णे देवाः अशनमभिहरन्ति । मध्यन्दिने मनुष्याः । अपराह्णे पितरः ॥ स वा ऽइन्द्रस्तथैव नुत्तश्चरन् अग्नीषोमाऽउपमन्त्रयाञ्चक्रे । अग्नीषोमौ युवं वै मम स्थो युवयोरहमस्मि । न युवयोरेष किञ्चन कं मऽइमं दस्युं वर्धयथ उप मावर्तेथामिति ॥ तौ होचतुः । किमावयोस्ततः स्यादिति ताभ्यामेत मग्नीषोमीयमेकादशकपालं पुरोडाशं निरवपत् । तस्मादग्नीषोमीय एकादशकपालः पुरोडाशो भवति ॥ तावेनमुपाववृततुः । तावनु सर्वे देवाः प्रेयुः, सर्वा विद्याः, सर्वं यशः, सर्वमन्नाद्यं, सर्वा श्रीः । तेनेष्ट्वेन्द्र एतद्भवद्यदिदमिन्द्रः । एषउ पौर्णमासस्य बन्धुः । स यो हैवं विद्वान् पौर्णमासेन यजत ऽएतां हैव श्रियं गच्छत्येवं यशो भवत्येवमन्नादो भवति ॥ तद्वेव खलु हतो वृत्रः । स यथा दृतिर्निष्पीत एवं संलीनः शिश्ये । यथानिर्धूतसक्तुर्भस्त्रैवं संलीनः शिश्ये । तमिन्द्रोऽभ्याद्रुद्राव हनिष्यन् ॥ स होवाच । मानु मे प्रहार्षीः । त्वं वै तदेतद्यसि यदहम् । व्येव माकुरु मामुया भूवमिति । स वै मेऽन्नमेधीति । तथेति । तं द्वेधान्वभिनत् । तस्य

यत्सौम्यं न्यक्तमास तं चन्द्रमसं चकार । अथ यदस्यासुर्यमास तेनेमाः प्रजा उदरेणाविध्यत् । तस्मादाहुर्वृत्र एव तह्य न्नाद आसीद्वृत्र एतर्हीति । इदं हि यदसावापूर्यते । अस्मादेवैतल्लोकादाप्यायते । अथ यदिमाः प्रजा अशनमिच्छन्तेऽस्माऽएवैतद्वृत्रायोदराय बलिं हरन्ति । स यो हैवमेतं वृत्रमन्नादं वेदान्नादो हैव भवति ॥ त उ हैता देवता ऊचुः । या इमा अग्नीषोमावन्वाजग्मुः । अग्नीषोमौ युवं वै नो भूयिष्ठभाजौ स्थः । ययोर्वामिदं युवयोरस्मान्वाभजतमिति ॥ तौ होचतुः । किमावयोस्ततः स्यादिति । यस्यै कस्यै च देवतायै हविर्निर्वपांस्तद्वां पुरस्तादाज्यस्य यजानिति । तस्माद्यस्यै कस्यै च देवतायै हविर्निर्वपन्ति तत्पुरस्तादाज्यभागावग्नीषोमाभ्यां यजन्ति । तन्न सौम्येऽध्वरे न पशौ यस्यै कस्यै च देवतायै निर्वपानिति ह्यब्रुवन् ॥ स हाग्निरुवाच । मय्येव वः सर्वेभ्यो जुह्वतु । तद्वोऽहं पर्य्याभजामीति । तस्मादग्नौ सर्वेभ्यो देवेभ्यो जुह्वति । तस्मदाहुरग्निः सर्वा देवता इति ॥ अथ ह सोम उवाच । मामेव वः सर्वेभ्यो जुह्वतु । तद्वोऽहं मय्याभजामीति । तस्मात् सोमं सर्वेभ्यो देवेभ्यो जुह्वति । तस्मादाहुः सोमः सर्वा देवता इति ॥ अथ यदिन्द्रे सर्वे देवास्तस्थानाः । तस्मादाहुरिन्द्रः सर्वा देवताः । इन्द्रश्रेष्ठादेवा इति । एतद्ध वै देवास्त्रेधैकदेवत्या अभवन् । स यो हैवमेतद्वेदैकधा हैव स्वानां श्रेष्ठो भवति ॥ द्वयं वा इदं न तृतीयमस्ति-आर्द्रं चैव शुष्कं च । यच्छुष्कं तदाग्नेयम् । यदार्द्रं तत् सौम्यम् । अथ यदिदं द्वयमेवाप्य किमेतावत् क्रियतऽइति । अग्नीषोमयोरेवाज्यभागौ । अग्नीषोमयोरुपांशु याजः, अग्नीषोमयोः पुरोडाशः । यदत एकतमेनैवेदं सर्वमाप्नोति । अथ किमेतावत् क्रियत इति । अग्नीषोमयोर्हैवैतावती विभूतिः प्रजातिः । सूर्य एवाग्नेयः । चन्द्रमाः सौम्यः । अहरेवाग्नेयम् । रात्रिः सौम्या । य एवापूर्यतेऽर्द्धमासः स आग्नेयः । योऽपक्षीयते स सौम्यः ॥ (शत १ का० । ६ प्र० । ३ ब्रा० । १-२४ क० । पृ० ४४-४६। )

## ॥ वृत्रप्रहरणोपाख्यानम् ॥

इन्द्रो ह यत्र वृत्राय वज्रं प्रजहार । सोऽबलीयान्मन्यमानो नास्तृषीतीव बिभ्यन्निलयांचक्रे । स पराः परावतो जगाम । देवा ह वै विदांचक्रुः-हतो वै वृत्रोऽथेन्द्रो न्यलेष्टेति । तमन्वेष्टुं दध्रिरे । अग्निर्देवतानां, हिरण्यस्तूप ऋषीणां, बृहती छन्दसाम् । तमग्निरनुविवेद । तेनैतां रात्रिं सहाजगाम । स वै देवानां वसुर्वीरोह्येषाम् । ते देवा अब्रुवन्-अमा वै नोऽद्य वसुर्वसति । यो नः प्रावात्सीदिति । ताभ्यामेतद्यथा ज्ञातिभ्यां वा सखिभ्यां वा सहागताभ्यां समानमोदनं पचेदजं वा । तदह मानुषं हविर्देवानाम् । एवमाभ्यामेतत्समानं हविर्निरवपन्नैन्द्राग्नं द्वादशकपालं पुरोडाशम् । तस्मादैन्द्राग्नो द्वादशकपालः पुरोडाशो भवति । स इन्द्रोऽब्रवीत् । यत्र वै वृत्राय वज्रं प्राहरम्, तद्व्यस्मये, स कृश इवास्मि न वै मेदं धिनोति । यन्मा धिनवत्तन्मे कुरुतेति । तथेति देवा

अब्रुवन्। ते देवा अब्रुवन्। नवाऽइममन्यत्सोमाद्विनुयास्त्सोमम्मेवास्मै सम्भरामेति। तस्मै सोमं सम्भरन् एष वै सोमो राजा देवानामन्नं यच्चन्द्रमाः ! स यत्रैष एतां रात्रिं न पुरस्तान्न पश्चाद्ददृशे तदिमं लोकमागच्छति स इहैवापश्चोषधीश्च प्रविशति। स वै देवानां वसु अन्नं ह्येषाम्। तद्यदेष एतां रात्रिमिहामा वसति तस्मादमावस्या नाम। तं गोभिरनुविष्ठाप्य समभरन्। यदोषधीराशं स्तदोषधिभ्यः। यदपोऽपिबंस्तदद्भ्यः। तमेवं सम्भृत्यातच्य तीव्रीकृत्य तमस्मै प्रायच्छन्। सोऽब्रवीत्। धिनोत्येव मेदम्। नेव तु मयि श्रयते। यथेदं मयि श्रयातै तथोपजानीतेति। तं शृतेनैवाश्रयन्॥ तद्वाऽएतत्। समानमेव सत्पय एव सदिन्द्रस्यैव सत्तत्पुनर्नानेवाचक्षते। यदब्रवाद्धिनोति मेति। तस्माद्दधि। अथ यदेनं शृतेनैवाश्रयं स्तमाच्छृतम्। स यथांऽशुराप्यायेत। एवमाप्यायत। अप पाप्मानं हरिमाणमहतैष उऽआमावास्यस्य बन्धुः। स यो हैवं विद्वान्त्सन्नयत्येवं हैव प्रजया पशुभिराप्यायतेऽप पाप्मानं हते॥ तस्माद्वै सन्नयेत॥ शत० १ का०। ५ प्र०। ३ ब्रा०। १-१० क०। पृ० ४८-४६। )

वार्त्रघ्नं वै पौर्णमासम्। इन्द्रो ह्येतेन वृत्रमहन्। अथैतदेव वृत्रहत्यं यदामावास्यम्। वृत्रं ह्यस्माऽएतज्जघ्नुषऽआप्यायनमकुर्वन्। तद्वाऽएतदेव वार्त्रघ्नं यत्पौर्णमासम्। अथैष एव वृत्रो यच्चन्द्रमाः। स यत्रैष एतां रात्रिं न पुरस्तान्न पश्चाद्ददृशे तदेनमेतेन सर्वं हन्ति। नास्य किंचन परिशिनष्टि। सर्वं ह वै पाप्मानं हन्ति। न पाप्मनः किंचन परिशिनष्टि य एवमेतद्वेद॥ तद्धैके दृष्ट्वोपवसन्ति-श्वो नोदेतेति। अदो हैव देवानां अविक्षीणमन्नं भवति। अथैभ्यो वयमित उपप्रदास्याम इति। तद्धि समृद्धं-यदक्षीणऽएव पूर्वस्मिन्नन्नेऽथापरमन्नमागच्छति। स ह बह्वन्न एव भवति। असोमयाजी तु क्षीरयाजी। अदो हैव सोमो राजा भवति। अथ यथैव पुरा केवलीरोषधीरश्नन्ति, केवलीरपः पिबन्ति। ताः केवलमेव पयो दुहऽएवं तत्। एष वै सोमो राजा देवानामन्नं यच्चन्द्रमाः। स यत्रैष एतां रात्रिं न पुरस्तान्न पश्चाद्ददृशे तदिमं लोकमागच्छति। स इहापश्चौषधीश्च प्रविशति। तदेनमभ्द्यः ओषधिभ्यः सम्भृत्याहुतिभ्योऽधि जनयति। स एष आहुतिभ्यो जातः पश्चाद्ददृशे। तद्वाऽएतत्। अविक्षीणमेव देवानामन्नाद्यं परिप्लवते। अविक्षीणं ह वाऽअस्यास्मिंल्लोकेऽन्नं भवति॥ अक्षय्यममुष्मिंल्लोके सुकृतं य एवमेतद्वेद। तद्वाऽएतां रात्रिं देवेभ्योऽन्नाद्यं प्रच्यवते। तदिमं लोकमागच्छति। ते देवा अकामयन्त-कथं नु न इदं पुनरागच्छेत् एवं नऽइदं परागेव न प्रणश्येदिति। तद्यऽएव संनयन्ति तेष्वाशंसन्त। एतऽएव नः सम्भृत्य प्रदास्यन्तीति।। आह वाऽअस्मिन्त्स्वाश्च निष्ट्याश्च शंसन्ते य एवमेतद्वेद। यो वै परमतां गच्छति तस्मिन्नाशंसन्ते। तद्वाऽएष एवेन्द्रः। य एष तपति॥ अथैष एव वृत्रो यच्चन्द्रमाः। सोऽस्यैव भ्रातृव्यजन्मेव। तस्माद्यद्यपि पुराविदूरमिवोदितोऽथैनमेतां रात्रिमुपैव न्याप्लवते। सोऽस्य व्यात्तमापद्यते। तं ग्रसित्वोदेति। स न पुरस्तात्न पश्चाद्ददृशे। ग्रसते ह वै द्विषन्तं भ्रातृव्यम् अयम् एवास्ति नास्य सपत्नाः सन्तीत्याहुर्य एव मेतद्वेद। तं निर्धीय निर

स्यति । स एष धीतः पश्चाद्ददृशे । स पुनराप्यायते । स एतस्यैवान्नाद्याय पुनराप्यायते । यदि ह वाऽस्य द्विषन्भ्रातृव्यो वणिज्यया वा केनचिद्वा संभवति । एतस्य हैवान्नाद्याय पुनः सम्भवति य एवमेतद्वेद ॥

तद्धैके महेन्द्रायेति कुर्वन्ति । इन्द्रो वाऽएष पुरा वृत्रस्य वधाद् । अथ वृत्रं हत्वा यथा महाराजो विजिग्यान एवं महेन्द्रोऽभवत् । तस्मान्महेन्द्रायेति । तद्विन्द्रायेत्येव कुर्याद् । इन्द्रो वा ऽएष पुरा वृत्रस्य वधादिन्द्रो वृत्रं जघ्निवांस्तस्माद्विन्द्रायेत्येव कुर्य्यात् ॥ ( शत० १ का० । ५ प्र० । ३ ब्रा० । १२-२१ क० । पृ० ४६-५० । )

## ॥ लुब्धकमृगव्याधरुद्रोपाख्यानम् ॥

प्रजापतिर्ह वै स्वां दुहितरमभिदध्यौ । दिवं वा उषसं वा । मिथुन्यनया स्यामिति । तां सम्बभूव । तद्धै देवानामाग आस य इत्थं स्वां दुहितरमस्माकं स्वसारं करोतीति । ते ह देवा ऊचुः ।

योऽयं देवः पशूनामीष्टे । अतिसन्धं वाऽअयं चरति य इत्थं स्वां दुहितरमस्माकं स्वसारं करोति । विध्येममिति । तं रुद्रोऽभ्यापत्य विव्याध । तस्य सामि रेतः प्रचस्कन्द । तथेन्नूनं तदास । "पिता यत्स्वां दुहितरमधिष्कन् क्ष्मया रेतः सञ्जग्मानो निषिञ्चदिति" । तदाग्निमारुत मित्युक्थं तस्मिंस्तद्व्याख्यायते । यथा—तद्देवा रेतः प्राजनयन् । तेषां यदा देवानां क्रोधो व्यैदथ प्रजापतिमभिषिज्यन् । तस्य तं शल्यं निरकृन्तन् । स वै यज्ञ एव प्रजापतिः । ते होचुः । उपजानीत यथेदन्नामुयामत्कनीयो ह्याहुतेर्यथेदं स्यादिति । ते होचुः । भगायैनद् दक्षिणत आसीनाय परिहरत तद्भगः प्राशिष्यति । तद्यथाहुतमेवं भविष्यतीति । तद्भगाय दक्षिणत आसीनाय पर्याजह्रुः । तद्भगोऽवेक्षांचक्रे । तस्याक्षिणी निर्ददाह । तथेन्नूनं तदास । तस्मादाहुरन्धो भग इति । ते होचुः । नोन्वेवात्राशमत् । पूष्णऽएनत्परिहरतेति । तत्पूष्णे पर्याजह्रुः । तत्पूषा प्राश । तस्य दतो निर्जघान । तथेन्नूनं तदास । तस्मादाहुरदन्तकः पूषेति । तस्माद्यं पूष्णे चरुं कुर्वन्ति–यथाऽदन्तकायैवम् । ते होचुः । नो न्वेवात्राशमद् । बृहस्पतयऽएनत्परिहरतेति । तद्बृहस्पतये पर्याजह्रुः । स बृहस्पतिः सवितारमेव प्रसवायोपाधावत् । सविता वै देवानां प्रसविता । इदम्मे प्रसुवेति । तदस्मै सविता प्रसविता प्रासुवत् । तदेनं सवितृप्रसूतं नाहिनत् । ततोऽर्वाचीनं शान्तम् । तदेतन्निदानेन यत्प्राशित्रम् । शत० १ का० । ६ प्र० । २ ब्रा० । १-८ क० । पृ० ५६-५७ )

## ॥ मनुकन्योपाख्यानम् ॥

मनवे ह वै प्रातः अवनेग्यमुदकमाजह्रुः । अथेदं पाणिभ्यामवनेजनायाहरन्त्येवम् । तस्यावनेनिजानस्य मत्स्यः पाणीऽआपेदे । स हास्मै वाचमुवाद । बिभृहि मा पारयिष्यामि त्वेति । कस्मान्मा पारयिष्यसीति । औघ इमाः सर्वाः प्रजा निर्वोढा ततस्त्वा पारयितास्मीति । कथं ते भृतिरिति । स होवाच । यावद्वै क्षुल्लका भवामो बह्वी वै नस्तावन्नाष्ट्रा भवति । उत मत्स्य एव मत्स्यं

गिरति । कुम्भ्यां माग्रे बिभरासि । स यदा तामतिवर्धाऽअथ कर्षूं खात्वा तस्यां मा बिभरासि । स यदा तामतिवर्धाऽअथ मा समुद्रमभ्यवहरासि । तर्हि वाऽअतिनाष्ट्रो भवितास्मीति । शश्वद्ध झष आस । सहि ज्येष्ठं वर्धतेऽथेति समां तदौघ आगन्ता । तन्मा नावमुपकल्प्योपासासै । स औघऽउत्थिते नावमापद्यासैथी ततस्त्वा पारयितास्मीति । तमेवं भृत्वा समुद्रमभ्यवजहार । स यतिथीं तत्समां परिदिदेश ततिथीं समां नावमुपकल्प्योपासांचक्रे । स औघऽउत्थिते नावमापेदे । तं स मत्स्य उपन्यापुप्लुवे । तस्य शृङ्गे नावः पाशं प्रति मुमोच । तेनैतमुत्तरं गिरिमतिदुद्राव । स होवाच । अपीपरं वै त्वा वृक्षे नावं प्रतिबध्नीष्व । तं तु त्वा मा गिरौ सन्तमुदकमन्तश्छैत्सीत्। यावदुदकं समवायात्तावत्तावदन्ववसर्पासीति । स ह तावत्तावदेवान्ववससर्प तदप्येतदुत्तरस्य गिरेर्मनोरवसर्पणमिति । औघो ह ताः सर्वाः प्रजा निरुवाह । अथेह मनुरेवैकः परिशिशिष्ये सोऽर्चंश्राम्यंश्चचार प्रजाकामः । तत्रापि पाकयज्ञेनेजे । स घृतं दधिमस्त्वामिक्षामित्यप्सु जुहवांचकार । ततः संवत्सरे योषित्सम्बभूव । सा ह पिब्दमानेवोदेयाय । तस्यै ह स्म घृतं पदे सन्तिष्ठते । तया मित्रावरुणौ सञ्जग्माते । तां होचतुः कासीति । मनोर्दुहितेति । आवयोर्ब्रूष्वेति । नेति होवाच । य एव मामजीजनत तस्यैवाहमस्मीति । तस्यामपि त्वमीषाते । तद्वा जज्ञौ तद्वा न जज्ञावति त्वेवेयाय । सा मनुमाजगाम । तां ह मनुरुवाच-कासीति । तव दुहितेति । कथं भगवति मम दुहितेति । या अमूरप्स्वाहुतीरहौषीर्घृतं दधि मस्त्वामिक्षां ततो मामजीजनथाः । साशीरस्मि । तां मा यज्ञेऽवकल्पय । यज्ञे चेद्वै मावकल्पयिष्यसि बहुः प्रजया पशुभिर्भविष्यसि । याममुया कांचाशिषमाशासिष्यसे सा ते सर्वा समर्धिष्यते इति । तामेतन्मध्ये यज्ञस्यावाकल्पयन् । मध्यं ह्येतद्यज्ञस्य यदन्तरा प्रयाजानुयाजान् । तयार्चंश्राम्यंश्चचार प्रजाकामः । तयेमां प्रजातिं प्रजज्ञे येयं मनोः प्रजातिः । यामवेनया कां चाशिषमाशास्त सा मै सर्वा समार्ध्यत । शत० १ का० । ६ प्र० । ३ ब्रा० । १-१० क० । पृ० ५८ ५९ ।

## ॥ यज्ञभागोपाख्यानम ॥

देवाश्च च वाऽअसुराश्च उभये प्राजापत्याः पस्पृधिरे । एतस्मिन्यज्ञे प्रजापतौ पितरि संवत्सरे ऽस्माकमयं भविष्यत्यस्माकमयं भविष्यतीति । ततो देवाः सर्वं यज्ञं संवृज्य अथ यत्पापिष्ठं यज्ञस्य भागधेयमासीत्तेनैनान्निरभजन् । नापशोः फलीकरणैर्हविर्यज्ञात्सुनिर्भक्ता असन्नित्येष वै सुनिर्भक्तो यं भागिनं निर्भजन्त्यथ यमभागं निर्भजन्त्यैव स तावच्छंसतऽउत हि वशो लब्ध्वाह किं मा बभक्थेति स यमेवैभ्यो देवा भागमकल्पयंस्तमेवैभ्य एष एतद्भागं करोत्यथ यदधोऽधः कृष्णाजिनमुपास्यत्यनग्नावेवैभ्य एतदन्धे तमसि प्रवेशयति तथोऽएवाखुपशो रक्षसां भागोऽसीत्यनग्नावन्धे तमसि प्रवेशयति तस्मात्पशोस्तेदनीं न कुर्वन्ति रक्षसां हि स भागः । ( शत० १ का० । ७ प्र० । ३ ब्रा० । ३४-३५ क० । ७१ पृ० )

## ॥ इति प्रथमं-काण्डम् ॥

# ॥ पृथ्वीप्रतिष्ठोपाख्यानम् ॥

देवाश्च वाऽअसुराश्च-उभये प्रजापत्याः पस्पृधिरे । सा हेयं पृथिव्यलेलायद्यथा पुष्कर पर्णमेवम् । तां ह स्म वातः संवहति । सोपैव देवाञ्जगाम । उपासुरान् । सा यत्र देवानुपजगाम । तद्धोचुः । हन्तेमां प्रतिष्ठां दृंहामहै । तस्यां ध्रुवायामशिथिलायामग्नीऽआदधामहै । ततोऽस्यै सपत्नान्निर्भक्ष्याम इति । तद्यथा शङ्कुभिश्चर्म विहन्यात् । एवमिमां प्रतिष्ठां पर्यबृंहन्त । सेयं ध्रुवा शिथिला प्रतिष्ठा तस्यां ध्रुवायामशिथिलायामग्नीऽआदधत । ततोऽस्यै सपत्नान्निरभजन् । तथोऽएवैष एतत् । इमां प्रतिष्ठां शर्कराः परिबृंहते । तस्यां ध्रुवायामशिथिलायामग्नीऽ आधत्ते । ततोऽस्यै सपत्नान्निर्भजति । शत० २ का० । १ प्र० । १ ब्रा० । ८-११ क० । ७५ पृ०

# ॥ चित्रानक्षत्रोपाख्यानम् ॥

देवाश्च वा असुराश्च-उभये प्राजापत्याः पस्पृधिरे । तऽउभयऽएवामुं लोकं समारुरुक्षां चक्रुर्दिवमेव ततोऽसुरा रौहिणमित्यग्निं चिक्यिरेऽनेनामुं लोकं समारोक्ष्याम इति । इन्द्रो हवाऽईक्षांचक्रे । इमं चेद्वाऽ इमे चिन्वते तत एव नोऽभिभवन्तीति । स ब्रह्मणो ब्रुवाण एकेष्टकां प्रवध्येयाय । स होवाच । हन्ताहमिमामप्युपदधाऽइति । तथेति तामुपाधत्त । तेषा मल्पकादेवाग्निरसंचित आस । अथ होवाच । अन्वाऽअहं तां दास्ये या ममेहेति । तामभि-पद्य ववर्ह । तस्यामावृढायामग्निर्व्यवशशाद । अग्नेर्व्यवशादमन्वसुरा व्यवशेदुः । स ता एवेष्टका वज्रान्कृत्वा ग्रीवाः प्रचिच्छेद । ते ह देवाः समेत्योचुः । चित्रं वाऽअभूम यऽइयतः सपत्नानवधिष्मेति । तद्वै चित्रायैः चित्रात्वम् । चित्रं ह भवति, हन्ति सपत्नान्हन्ति द्विषन्तं भ्रातृव्यं, य एवं विद्वांश्चित्रायामाधत्ते । तस्मादेतत्क्षत्रिय एव नक्षत्रमुपेप्सेज्जिघांसतीव ह्येष सपत्नान् । वीव जिगीषते । शत० का० २ । प्र० १ । ब्रा० २ । क० १३-१६ । पृ० ७७ । )

# ॥ सूर्य्यनक्षत्रोपाख्यानम् ॥

नाना हवाऽएतान्यग्रे क्षत्राण्यासुः । यथैवासौ सूर्य एवम् । तेषामेष उद्यन्नेव वीर्यं क्षत्रमादत्त । तस्मादादित्यो नाम । यदेषां वीर्यं क्षत्रमादत्त । ते ह देवाः ऊचुः । यानि वै तानि क्षत्राण्यभूवन्निति, तद्वै नक्षत्राणां नक्षत्रत्वम् । तस्मादु सूर्यनक्षत्रऽएव स्याद् । एष ह्येषां वीर्यं नक्षत्रमादत्त । यद्यु नक्षत्रकामः स्याद् । एतद्वाऽअनपराद्धं नक्षत्रं यत्सूर्यः । स एतेनैव पुण्याहेन यदैतेषां नक्षत्राणां कामयेत तदुपेप्सेत् । तस्मादु सूर्यनक्षत्रऽएव स्यात् । शत० का० २ । प्र० १ । ब्रा० २ । क० १८-१६ । पृ० ७७ । )

# ॥ अमृतमर्त्योपाख्यानम् ॥

देवाश्च वाऽअसुराश्च–उभये प्राजापत्याः पस्पृधिरे । तऽउभय ऽएवानात्मान आसुः मर्त्या ह्यासुः । अनात्मा हि मर्त्यः । तेषूभयेषु मर्त्येष्वग्निरेवामृत आस । तं ह स्मोभयेऽमृतमुप जीवन्ति । स यं ह स्मैषां घ्नन्ति तद्ध स्म वै स भवति । ततो देवाः तनीयांस इव परिशिशि-षिरे । तेऽर्चन्तः श्राम्यन्तश्चेरुः । उतासुरान्त्सपत्नान्मर्त्यानभिभवेमेति । तऽएतदमृतमग्न्याधेयं ददृशुः । ते होचुः । हन्तेदममृतमन्तरात्मन्नाधायामृता भूत्वास्तर्या भूत्वा स्तर्यान्त्सपत्नान्मर्त्या-नभिभविष्याम इति ते होचुः । उभयेषु वै नोऽयमग्निः । प्रत्वेवासुरेभ्यो ब्रवामेति । ते होचुः । आवै वयमग्नी धास्यामहे । अथ यूयं किं करिष्यथेति । ते होचुः । अथैनं वयं न्येवाधास्यामहे अत्र तृणानि दह । अत्र दारूणि दह । अत्रोदनं पच । अत्र मांसं पचेति । स यं तमसुरान्यद-धत । तेनानेन मनुष्या भुञ्जते । अथैनं देवा अन्तरात्मन्नादधत । तऽइममममृतमन्तरात्मन्नाधायामृता भूत्वास्तर्या भूत्वा स्तर्यान्त्सपत्नान्मर्त्यानभ्यभवन् । तथोऽएवैष एतदमृतमन्तरात्मन्नाधत्ते । नामृतत्वस्याशास्ति सर्वमायुरेति । अस्तर्यो हैव भवति । न हैनं सपत्नस्तुस्तूर्षमाणश्च न स्तृणुते । तस्मादाहिताग्निश्चानाहिताग्निश्च स्पर्धेतेऽआहिताग्निरेवाभिभवति अस्तर्यो हि खलु स तर्हि भवत्यमृतः । शत० का० २ । प्र० १ । ब्रा० ६ । क० ८-१४ । पृ० ८४। )

# ॥ स्वाहोपाख्यानम् ॥

प्रजापतिर्ह वा ऽइदमग्र ऽएक एवास । स ऐक्षत कथं नु प्रजायेयेति । सोऽश्राम्यत् स तपो ऽतप्यत । सोऽग्निमेव मुखाज्जनयांचक्रे । तद्यदेनं मुखादजनयत तस्मादन्नादोऽग्निः । स यो हैव मेतमग्निमन्नादं वेदान्नादो हैव भवति । तद्वाऽएनमेतदग्रे देवानामजनयत । तस्मादग्निः । अग्निर्ह वै नामैतद्यदग्निरिति । स जातः पूर्वःप्रेयाय । यो वै पूर्व एत्यग्र ऽएतीति वै तमाहुः । सोऽएवास्याग्निता । स ऐक्षत प्रजापतिः । अन्नादं वा ऽइममात्मनोऽजीजने यदग्निम् । न वा ऽइह मदन्यदन्नमस्ति यं वा ऽअयं नाद्यादिति । काल्वालीकृता हैव तर्हि पृथिव्यास । नौषधय आसुर्न वनस्पतयः । तदेवास्य मनस्यास । अथैनमग्निर्व्यात्तेनोपपर्यावर्त्त । तस्य भीतस्य स्वो महिमापचक्राम । वाग्वाऽ अस्य स्वो महिमा । वागस्यापचक्राम । स आत्मन्नेवाहुतिमीषे । उदमृष्ट । तद्यदुदमृष्ट तस्मादिदं चालोमकमिदं च । तत्र विवेद घृताहुतिं वैव पयआहुतिं वा । उभयं ह त्वेव तत्पय एव । सा हैनं नाभिराधयांचकार । केशमिश्रेव हास । तां व्यौक्षदोषं धयेति । तत ओषधयः समभवन् । तस्मादोषधयो नाम । स द्वितीयमुदमृष्ट । तत्रापरामाहुतिं विवेद घृताहुतिं वैव पयआहुतिं वा । उभयं ह त्वेव तत्पय एव । सा हैनमभिराधयांचकार ।

स व्यचिकित्सज्जुहवानी मा हौषामिति । तं स्वो महिमाभ्युवाद-जुहुधीति । स प्रजापतिर्विदां चकार-स्वो वै मा महिमाहेति । स स्वाहेत्येवाजुहोत् । तस्मादु स्वाहेत्येव हूयते । तत एष उदियाय य एष तपति । ततोऽयं प्रबभूव योऽयं पवते । तत एवाग्निः पराङ् पर्याववर्त । स हुत्वा प्रजापतिः । प्रचाजायतात् स्यतश्चाग्नेर्मृत्योरात्मानमत्रायत । शत० का० २ । प्र० २ । ब्रा० २ । क० १-७ । पृ० ८७। )

## ॥ देववीरोपाख्यानम् (अग्निवायुसूर्याः) ॥

तद्वा एतत् । एवं विचिकित्सायै जन्म यत्प्रजापतिर्व्यचिकित्सत् । स विचिकित्संश्छ्रेयस्य- श्रियत यः प्रचाजायतात् स्यतश्चाग्नेर्मृत्योरात्मानमत्रायत । स हुत्वा न्यमृष्ट । ततो विकङ्कतः समभवत्तस्मादेष यज्ञियो यज्ञपात्रीयो वृक्षः तत एते देवानां वीरा अजायन्त । अग्निर्योऽयं पवते सूर्यः स । तऽउहैतऽऊचुः । वयं वै प्रजापतिं पितरमनु स्मः । हन्त वयं तत्सृजामहै यदस्मा- नन्वसदिति । ते परिश्रित्य गायत्रेणापहिंकारेण तुष्टुविरे । तद्यत्पर्यश्रयन्त्स समुद्रः । अथेय- मेव पृथिव्यास्तावः । ते स्तुत्वा प्राञ्च उच्चक्रमुः । पुनरेम इति देवा एद्गां सम्भूताम् । सा हैना- नुदीक्ष्य हिंचकार । ते देवा विदांचक्रुः एष साम्नो हिङ्कारः इति । अपहिंकारं हैव पुरा ततः सामास । स एष गवि साम्नो हिंकारः तस्मादेषोपजीवनीया । शत० का० २ । प्र० २ । ब्रा० २ । क० ८-१२ । पृ० ८८। )

## ॥ अग्निहोत्रोपाख्यानम् ॥

ते होचुः । भद्रं वाऽइदमजीजनामहि ये गामजीजनामहि । यज्ञो ह्येवेयं, नो ह्यृते गोर्यज्ञ- स्तायते । अन्नं ह्येवेयं, यद्धि किं चान्नं गौरेव तदिति । तद्वाऽएतदेवैतासां नाम एतद्यज्ञस्य ।

तासु हाग्निरभिदध्यौ । मिथुन्यनया स्यामिति । तां सम्बभूव । तस्यां रेतः प्रासिञ्चत्तत्पयो ऽभवत्तस्मादेतदामायां गवि सत्यां श्रृतम् । अग्नेर्हि रेतस्तमाद्यदि कृष्णायाम् यद्धि रोहिण्यां शुक्लमेवभवत्यग्निसंकाशम् । अग्नेर्हि रेतः । तस्मात्प्रथमदुग्धमुष्णं भवत्यग्नेर्हि रेतः । ते होचुः । हन्तेदं जुहवामहाऽइति । कस्मै न इदं प्रथमाय होष्यन्तीति । मह्यमिति हैवाग्निरुवाच । मह्यमिति योऽयं पवते । मह्यमिति सूर्यः ते न सम्पादयाञ्चक्रुस्ते हासम्पाद्योचुः । प्रजापतिमेव पितरं प्रत्ययामः । स यस्मै न इदं प्रथमाय होतव्यं वक्ष्यति तस्मै न इदं प्रथमाय होष्यन्तीति । ते प्रजापतिं पितरं प्रतीत्योचुः कस्मै न इदं प्रथमाय होष्यतीति । सहोवाच । अग्नये । अग्निरनुष्ठ्या स्वं रेतः प्रजनयिष्यते तथा प्रजनिष्यध्वऽइति । अथ तुभ्यमिति सूर्यम् । अथ यदेव हूयमानस्य व्यश्नुते तदेवैतस्य योऽयं पवतेऽइति । तदेभ्य इदम् । अप्येतर्हि तथैव जुह्वति

अग्नयऽएव सायम् । सूर्याय प्रातः । अथ यदेव हूयमानस्य व्यश्नुते तदेवैतस्य योऽयं पवते । ते हुत्वा देवाइमां प्रजातिं प्राजायन्त यैषामियं प्रजातिः । इमां विजितिं व्यजयन्त येयमेषां विजितिः । इममेव लोकमग्निरजयत् । अन्तरिक्षं वायुः । दिवमेव सूर्यः । स यो हैवं विद्वानग्निहोत्रं जुहोति एतां हैव प्रजातिं प्रजायते यामेतऽएतत्प्राजायन्तै । तां विजितिं विजयते यामेतऽएतद्व्यजयन्तै । तैरुहैव स लोको भवति । य एवं विद्वानग्निहोत्रं जुहोति । तस्माद्वाऽअग्निहोत्रं होतव्यम् । शत० का० २ । प्र० २ । ब्रा० २ क० १३-१८ । पृ० ८८ )

# ॥ यज्ञोपवीतोपाख्यानम् ॥

प्रजापतिं वै भूतान्युपासीदन् । प्रजा वै भूतानि वि नो धेहि यथा जीवामेति । ततो देवा यज्ञोपवीतिनो भूत्वा दक्षिणं जान्वाच्योपासीदन् । तानब्रवीद् । यज्ञो वोऽन्नममृतत्वं व ऊर्ध्वः सूर्यो वो ज्योतिरिति । अथैनं पितरः प्राचीनावीतिनः सव्यं जान्वाच्योपासीदन् । तानब्रवीत् । मासि मासिवोऽशन, स्वधा वो मनोजवोनश्चन्द्रमा वो ज्योतिरिति । अथ हैनं मनुष्या प्रावृता उपस्थं कृत्वा उपासीदन् । तानब्रवीत् सायं प्रातर्वोऽशनं प्रजा वो मृत्युः अग्निर्वो ज्योतिरिति । अथैनं पशवउपासीदन् । तेभ्यः स्वैषमेव चकार । यदैव यूयं कदा च लभाध्वै यदि काले यद्यना काले-अथैवाश्नीथेति । तस्मादेते यदैव कदाच लभन्ते यदि काले यद्यनाकालेऽथैवाश्नन्ति । अथ हैनं शश्वदप्यसुरा उपसेदुरित्याहुः । तेभ्यस्तमश्च मायां च प्रददौ । अस्त्यहैवासुरमायेतीव पराभूताः । ह त्वेव ताः प्रजाः । ता इमाः प्रजास्तथैवोपजीवन्ति यथैवाभ्यः प्रजापतिर्व्यदधात् । नैवं देवा अतिक्रामन्ति । न पितरो न पशवः । मनुष्या एवैकेऽतिक्रामन्ति । तस्माद्यो मनुष्याणां मेद्यत्यशुभे मेद्यति । विहूर्च्छति हि नह्ययनाय चन भवति अनृतं हि कृत्वा मेद्यति । तस्मादु सायं प्रातराश्येव स्यात् । स यो हैवं विद्वान् सायंप्रातराशी भवति सर्वं हैवायुरेति । यदु ह किंच वाचा व्याहरति तदु हैव भवति । एतद्धि देवसत्यं गोपायति । तद्धैतत्तेजो नाम ब्राह्मणं य एतस्य व्रतं शक्नोति चरितुम् । शत०का० २ । प्र० ३ । ब्रा० ४ । क० १-६ । पृ० १०० ।

# ॥ प्रकीर्णतन्त्रम् ॥

उच्चैःश्रवा ह कौपयेयः कौरव्यो राजाऽऽस । तस्य ह केशी दार्भ्यः पाञ्चालो राजा स्वस्रीय आस । तौ हाऽन्योन्यस्य प्रियावासतुः ॥ १ ॥ स होच्चैःश्रवाः कौपयेयोऽस्माल्लोकात् प्रेयाय । तस्मिन् ह प्रेते केशी दार्भ्योऽरण्ये मृगयां चचाराऽप्रियं विनिनीषमाणः ॥ २ ॥ स ह तथैव पलायमानो मृगान् प्रसरन्नन्तरेणैवोच्चैःश्रवसं कौपयेयमधिजगाम ॥ ३ ॥ तं होवाच हन्यामि स्वाःश्वस्त्रीयं जानामीति । न हन्यसीति होवाच जानासि । स एवास्मि यस्मा मन्यस इति ॥ ४ ॥ अथ यद्भगव आहुरिति होवाच य आविर्भवत्यन्येऽस्य लोकमुपयन्ति इत्यथ कथमशको म आविर्भवितुमिति ॥ ५ ॥ ओमिति होवाच यदा वै तस्य लोकस्य गोप्तारमविदेऽतस्त आविरभूवमाप्रियं चास्य विनेष्याम्यनु चैनं शासिष्यामीति ॥ ६ ॥ तथा भगव इति होवाच । तं वै नुत्वा परिष्वजा इति । तं ह स्म परिष्वजमानो यथा धूमं वापीयाद्वायुं वाकाशं वाग्न्यर्चिं वाऽपोवैवं ह स्मैनं व्येति । न ह स्मैनम्परिष्वङ्गायोपलभते ॥ ७ ॥ ३ ॥ २६ ॥

स होवाच—यद्वै ते पुरा रूपमासीत्तत्ते रूपम् । न तु त्वा परिष्वङ्गायोपलभ इति ॥ १ ॥ ओमिति होवाच । ब्राह्मणो वै मे साम विद्वान् सामोदगायत् । स मेऽशरीरेण साम्ना शरीराण्यधूनोत् । तद्यस्य वै किल साम विद्वान् साम्नोद्गायति–देवतानामेव सलोकतां गमयतीति ॥ २ ॥ पतङ्गः प्राजापत्य इति होवाच प्रजापतेः प्रियः पुत्र आस । स तस्मा एतत् सामाब्रवीत् तेन स ऋषीणामुदगायत् । त एत ऋषयो धूतशरीरा इति ॥ ३ ॥ एतेनी एव साम्नेति होवाच । प्रजापतिर्देवानामुदगायत् । त एत उपरि देवबा धूतशरीरा इति ॥ ४ ॥ तस्मिन् हैनमनुशशाम । तं हानुशिष्योवाच- यस्मैवैतत् साम विद्यात् स्मैव त उद्गायत्विति ॥ ५ ॥ स हानुशिष्ट आजगाम । स ह स्म कुरुपञ्चालानाम्ब्राह्मणानुपपृच्छमामनश्चरति ॥ ६ । ३ । ३० ॥

व्यूढच्छन्दसा वै द्वादशाहेन यक्ष्यमाणोऽस्मि । स यो वस्तत्साम वेद यदहं वेद स एव म उद्गास्यति । मीमांसध्वमिति ॥ १ ॥ तस्मै ह मीमांसमानानामेकश्चन ( न ) सम्प्रत्यभिदधाति ॥ २ ॥ स ह तथैव पल्ययमानश्श्मशाने वा वने वाऽऽवृती शयानमुपाधावयांचकार । तं ह चायमानः प्रजहौ ॥ ३ ॥ तं होवाच कोऽसीति । ब्राह्मणोऽस्मि प्रातृदो भाल्ल इति ॥ ४ ॥ स किं वेत्थेति । सामेति ॥ ५ ॥ ओमिति होवाच व्यूढच्छन्दसा वै द्वादशाहेन यक्ष्यमाणोऽस्मि । स यदि तत्साम वेत्थ यदहं वेद त्वमेव म उद्गास्यसि । मीमांसस्वेति ॥ ६ ॥ तस्मै ह मीमांसमानस्तदेव सम्प्रत्यभिदधौ ॥ ७ ॥ तं होवाचाऽयम्य उद्गास्यतीति ॥ ८ ॥ तस्मै ह कुरुपञ्चालानाम्ब्राह्मणा असूयन्त आहुरेषु ह वा अयं कुल्येषु सत्सूद्गास्यति । कस्मा अयमलमिति ॥ ९ ॥ अलं न्वैव मह्यमिति ह स्माह । सैवाऽलम्मस्याऽलम् मतायैद्गतस्य हालमेवोज्जगौ । तस्मादालम्यैलाजोद्गातेत्याख्यापयन्ति ॥ १० ॥ ३ । ३१ ॥

तद्ध सात्यकीर्ता आहुर्यां वयं देवतामुपास्मह एकमेव वयं तस्यै देवतायै रूपं गव्यादिशाम एकं वाहने, एकं हस्तिन्येकम्पुरुषे, एकं सर्वेषु भूतेषु । तस्या एवेदं देवतायै सर्वं रूपमिति ॥ १ ॥ तदेतदेकमेव रूपम्प्राण एव । यावद्ध्येव प्राणेन प्राणिति तावद्रूपम्भवति तद्रूपम्भवति । तदथ यदा प्राण उत्क्रामति दार्वेवेव भूतोऽनर्थ्यः परिशिष्यते न किंचन रूपम् ॥ ३ ॥ तपसोऽन्तरात्माग्निः । सनिरुक्तः तस्मात्स दहति तस्मात्तप्यमानस्योष्णतरः प्राणो भवति ॥ ४ ॥ तस्यान्तरात्मा तपः । अथाधिदैवतम् । इयमेवैषा देवता योऽयम्पवते ॥ ५ ॥ तस्मिन्नेतस्मिन्नापोऽन्तः । तदन्नम् । सोऽरूक्ष उपासितव्यः । यदस्मिन्नापोऽन्तस्तेनारूक्षः ॥ ६ ॥ तस्यान्तरात्मा तपः । तस्मादेष आतपत्युष्णतरः पवते ॥ ७ ॥ तपसोऽन्तरात्मा विद्युत् स निरुक्तः । तस्मात्सोऽपि दहति ॥ ८ ॥ तानि वा एतानि चत्वारि सामानि प्राणो वाङ्मनस्स्वरः । स एष प्राणो वाचा करोति मनोनेत्रः । तस्य स्वर एव प्रजावान् भवति य एवं वेद ॥ ६ ॥ ३ ॥ ३२ ॥

स यो वायुः प्राण एव सः । योऽग्निर्वागेव सा । यश्चन्द्रमा मन एव तद् । य आदित्यस्स्वर एव सः । तस्मादेतमादित्यमाहुस्स्वर एतीति ॥ १ ॥ स यो ह वा अमूर्देवता उपासते या अमूरधिदेवतं दूरूपा वा एवा दुरनुसम्प्राप्या इव । कस्तद्वेदयद्येता अनु वा सम्प्राप्नुयान्न वा ॥ ॥ अथ य एना अध्यात्ममुपास्ते स ह्यान्तिदेवो भवति । निर्जीर्यन्तीव वा इत एता (त्) अस्य वा एताश्शरीरस्य सह प्राणेन निर्जीर्यन्ति । क उ एव तद्वेद यद्येता अनु वा सम्प्राप्नुयान्न वा ॥ ३ ॥ अथ य एना उभयीरेकधा भवन्तीर्वेद स एवानुष्ठ्या साम वेद स आत्मानं वेद स ब्रह्म वेद ॥ ४ ॥ तदाहुः प्रादेशमात्राद्वा इत एता एकम्भवन्ति । प्रतो ह्येवम्प्राणस्स्वयं उपर्युपरि वर्तत इति ॥ ५ ॥ अथ हैक आहुश्चतुरंगुलाद्वा इत एता एकम्भवन्तीति ॥ अतो ह्येवायम्प्राणस्स्वयं उपर्युपरि वर्तत इति ॥ ६ ॥ स एष ब्राह्मण आवर्तः । स य एवमेतम्ब्राह्मण आवर्तं वेदाऽभ्येनम्प्रजाः पशव आवर्तन्ते सर्वमायुरेति ॥ ७ ॥ स यो हैवं विद्वान् प्राणेन प्राण्यापानेनाऽपान्य मनसैता उभयोर्देवता आत्मन्येत्य मुख आधत्ते तस्य सर्वमाप्तम्भवति सर्वं जितम्, न हास्य कश्चन कामोऽनाप्तो भवति य एवं वेद ॥ ८ ॥ ३ ॥ ३३ ॥

तदेतन्मिथुन यद् वाक् च प्राणश्च मिथुनमृक्सामे । आचतुरं वाव मिथुनम्प्रजननम् ॥१॥ तद्यत्राऽद आह सोमः पवत इति वोपावर्तध्वमिति वा तत्सहैव वाचा मनसा प्राणेन स्वरेण हिङ्कुर्वन्ति । तद् हिङ्कारेण मिथुनं क्रियते ॥ २ ॥ सहैव वाचा मनसा प्राणेन स्वरेण निधनमुपयन्ति । तन्निधनेन मिथुनं क्रियते ॥ ३ ॥ तत् सप्तविधं साम्नः । सप्तकृत्व उद्गाताऽऽत्मानं च यजमानं च शरीरात्प्रजनयति ॥ ४ ॥ यादृशस्यो ह वै रेतो भवति तादृशं सम्भवति यदि वै पुरुषस्य पुरुष एव, यदि गोर्गौरेव, यद्यश्वस्याश्व एव, यदि मृगस्य मृग

एव । यस्यैव रेतो भवति तदेव सम्भवति ।। ५ ॥ तद्यथा ह वै सुवर्णं हिरण्यमग्नौ प्रासमानं कल्याणतरं कल्याणतरम्भवति एवमेव कल्याणतरेण कल्याणतरेणात्मना सम्भवति य एवं वेद ॥ ६ ॥ तदेतदृचाभ्यनूच्यते ॥ ७ ॥ ३ ॥ ३४ ॥

पतङ्गमक्तमसुरस्य मायया हृदा पश्यन्ति मनसा विपश्चितः ।

समुद्रे अन्तः कवयो विचक्षते मरीचीनाम्पदमिच्छन्ति वेधस इति ॥ १ ॥

पतङ्गमक्तमिति । प्राणो वै पतङ्गः । पतन्निव ह्येष्वङ्गेष्वति रथमुपदीक्षते । पतङ्ग इत्याचक्षते ॥ २ ॥ असुरस्य माययेति । मनो वा असुरम्, तस्यैष माययाक्तः ॥ ३ ॥ हृदा पश्यन्ति मनसा विपश्चित इति । हृदैव ह्येते पश्यन्ति यन्मनसा विपश्चितः । समुद्रे अन्तः कवयो विचक्षत इति । पुरुषो वै समुद्र एवंविद उ कवयः । त इमाम्पुरुषेऽन्तर्वाचं विचक्षते ॥ ४ ॥ मरीचीनाम्पदमिच्छन्ति वेधस इति । मरीच्य इव वा एता देवता यदग्निर्वायुरादित्यश्चन्द्रमा ॥ ६ ॥ न ह वा एतासां देवतानाम्पदमस्ति । पदेनो ह वै पुनर्मृत्युस्वते ॥ ७ ॥ तदेतदनन्वितं साम पुनर्मृत्युना । अति पुनर्मृत्युं तरति य एवं वेद ॥ ८ । ३ । ३५ ॥

पतङ्गो वाचम्मनसा बिभर्ति तां गन्धर्वोऽवदद् गर्भे अन्तः ।

ता द्योतमानां स्वर्यम्मनीषामृतस्य पदे कवयो निपान्ति इति ॥ १ ॥

पतङ्गो वाचम्मनसा बिभर्तीति । प्राणो वै पतङ्गः । स इमां वाचम्मनसा बिभर्ति ॥ २ ॥ तां गन्धर्वोऽवदद्गर्भे अन्तरिति । प्राणो वै गन्धर्वः पुरुषः उ गर्भः । स इमां पुरुषेऽन्तर्वाचं वदति ॥ ३ ॥ तां द्योतमानां स्वर्यम्मनीषामिति । स्वयो ह्येषा मनीषा यद्वाक् ॥ ४ ॥ ऋतस्य पदे कवयो निपान्तीति । मनो वा ऋतमेवंविद उ कवयः । आभिःयेनदेवाग्रतमृतम् । तेन यदृग्मनोमांसन्ते यद्यजुर्यत्साम तदेनां निपान्ति ॥ ५ । ३ । ३६

अपश्यं गोपामनिपद्यमानमा च परा च पाथिभिश्चरन्तम् ।

स सध्रोचोस्स विषूचोर्वसान आ वरीवर्ति भुवनेष्वन्तः इति ॥ १ ॥

अपश्यं गोपामनिपद्यमानमिती । प्राणो वै गोपाः । स हीदं सर्वमनिपद्यमानो गोपायति ॥ २ ॥ आ च परा च पाथिभिश्चरन्तमिति । तद्येच ह वा इमे प्राणा अमी च रश्मय एतैर्ह वा एष एतदा च पराच पाथिभिश्चरति ॥ ३ ॥ स सध्रीचीः स विषूचोर्वसान इति । सध्रोचोश्च ह्येष एतद्विषूचीश्च प्रजा वस्ते ॥ ४ ॥ आ वरीवर्ति भुवनेष्वन्तरिति एष ह्येवैषु भुवनेष्वन्तरावरीवर्ति ॥ ५ ॥ स एष इन्द्र उद्गीथः । स यदेष इन्द्र उद्गीथ आगच्छति नैनोद्गातुश्चागातॄणां च विज्ञायते । एत एवोर्ध्वस्स्वरुदेति । स उपरमूर्ध्नों लेलायति ॥ ६ ॥ स विद्यादागदिन्द्रो नेह कश्चन पाप्मान्यङ्गः परिशेक्ष्यत इति । तस्मिन् ह न कश्चन पाप्मान्यङ्गः परिशिष्यते ॥ ७ ॥ तदेतद्भ्रातृव्यं साम । न ह वा इन्द्रते कश्चन भ्रातृव्यम्पश्यते स यथेन्द्रो न कंचन भ्रातृव्यम्पश्यत एवमेव (व) कंचन भ्रातृव्यम्पश्यते य एतदेव वेदाथो यस्यैवं विद्वानुद्गायति ॥ ८ । ३ । ३७ ॥

# ॥ वैज्ञानिकोपाख्यानशुद्धिपत्रम् ॥

| पृष्ठम् | पंक्तिः | अशुद्धम् | शुद्धम् | पृष्ठम् | पंक्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|---|---|---|---|
| १ | ७ | केनाच | केनचि | ६ | २ | सोमारणे | सोमाहरणे |
| १ | ६ | वर | वरं | ६ | ३ | पराधा | पराधो |
| १ | ११ | कद्र | कद्रू | ६ | १२ | ज्ञतवेदसं | ज्ञातवेदसं |
| २ | १२ | श्रवस | श्रवसं | ६ | २२ | चिकीषित | चिकीर्षित |
| २ | १६ | कद्रः | कद्रूः | ६ | २५ | गृह्यतम् | गृह्यताम् |
| २ | २८ | दण्डो | दण्डो | १० | १५ | कवचनि | कवचानि |
| ३ | ४ | मातुवर्च | मातुर्वचः | १० | २६ | सहस्रचो | सहस्राचा |
| ३ | १४ | दिव्य | दिव्य | १० | २८ | प्रत्यभिद्रत्य | द्रत्यभिद्रुत्य |
| ३ | १८ | कद्र | कद्रू | ११ | ८ | लाकयन् | लोकयन् |
| ३ | २२ | रिवाद्भा | रिवोद्भा | ११ | १२ | मयोमय | मयोमयं |
| ५ | ३ | व्रवीत् | ब्रवीत् | ११ | १५ | धस्तद | धस्ताद |
| ५ | १२ | भूताना | भूतानां | ११ | २० | परिगृह्य | परिगृह्य |
| ५ | १४ | त्वभ्युदयेन | त्वभ्युदयेन | ११ | २० | विनिःसूत | विनिःसृत |
| ६ | २२ | पार्य्यप्तं | र्याप्तं | ११ | २६ | मिच्छाम | मिच्छामि |
| ६ | २५ | वृत्यर्थ | वृत्यर्थं | १३ | ३ | मंस्मर | संस्मर |
| ७ | ७ | कूम्मा | कूम्मां | १३ | ४ | तवार्थिता | तवार्थितां |
| ७ | १२ | पारक्षिप्तान् | परिक्षिप्तान् | १३ | १४ | हत | हतं |
| ७ | १३ | चैकोऽप | चैकोऽपि | १३ | २१ | संसाद | संसदि |
| ७ | १७ | सुपर्णस्त | सुपर्णस्तं | १४ | ६० | सुवाहुः | सुबाहुः |
| ७ | २२ | मायेन | मास्येन | १ | ८० | अञ्जन | अञ्जनः |
| ८ | १ | शनै | शनैः | १५ | १ | कद्रं | कद्रूं |
| ८ | २ | म्यपतत् | न्यपतत् | १५ | ८ | ब्रहि | ब्रूहि |
| ८ | ४ | संकल्प | संकल्पं | १५ | १५ | स्वाभा | स्वभाव |
| ८ | ४ | ावदित्वा | विदित्वा | १५ | १९ | दिष्ठया | दिष्ट्या |
| ८ | ७ | नप्येय | नप्येष | १५ | २३ | चलितेय | चलितेयं |

| पृष्ठम् | पंक्तिः | अशुद्धम् | शुद्धम् | पृष्ठम् | पंक्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|---|---|---|---|
| १५ | २१ | धारयत | धारयता | २० | ११ | सुराण मपि | सुराणामपि |
| १६ | ५ | मोत्तार्थ | मोत्तार्थं | २० | २३ | म या | माया |
| १६ | ७ | ।वद्यते | विद्यते | २० | २४ | पतन य | पतनाय |
| | १२ | सपा | सर्पा | २० | २५ | स्म ज्जहास | स्माज्जह स |
| १६ | १८ | ष्यतांनि | ष्यन्तीति | २० | २६ | कारण | कारणं |
| | | त्वाहु | त्वाहुः | २१ | ६ | त्यस्तीरे | त्यास्तीरे |
| १६ | १६ | तस्मन् | तस्मिन् | २१ | १४ | यथासखम् | यथासुखम् |
| १६ | २० | सवान् | सर्वान् | २१ | २२ | प्रवग्या | प्रवर्ग्या |
| १६ | २१ | ेषां | रेषां | २२ | २० | णोक्त | णोक्तं |
| १७ | १२ | सर्वेष | सर्वेषा | २२ | २३ | लषमाण | लषमाणः |
| १७ | १७ | नून | नूनं | २३ | १० | ग्थान | स्थान |
| १७ | १६ | दचष्टे | दाचष्टे | २३ | २२ | नर्मो | नमो |
| १७ | २१ | भवता | भविता | २३ | २६ | दुश्चर | दुश्चरं |
| १७ | २४ | रूढ़ोऽहृ | रूढ़ोऽहं | २३ | २७ | पादाङ्गष्ठेन | पादाङ्गुष्ठेन |
| १८ | २० | कवरुणालयं | वरूणालयं | २३ | २८ | नद्योनदीः | नद्योनदाः |
| १८ | २५ | प्राप्तकाल | प्राप्तकालं | २४ | ३ | | सुनीति |
| १८ | २६ | धम्मचारिण | धर्म्मचारिणः | २४ | २६ | सवशो | सर्वशो |
| १८ | २८ | शापान्तन्तस्त | शापान्तः | २५ | ५ | साञ्निवर्त्ये | सन्निवर्त्ये |
| १८ | ३० | भार्य्या | भार्य्या | २५ | ६ | प्रर्थयते | प्रार्थयते |
| १६ | १५ | तत | ततः | २६ | २ | बाहवोः | बाह्वोः |
| २० | २ | किमत | किमतः | २७ | ६ | अह् | अहं |
| २० | ३ | न्निवाय | न्निवार्य | | | | |
| २० | ५ | .... | .... | | | | |

॥ इति ॥

# ॥ वैदिकोपाख्यानशुद्धिपत्रम् ॥

| पृष्ठम् | पंक्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| १ | २ | माथवा | माथवो |
| १ | ६ | धृत | घृत |
| १ | १० | ान्न | तन्न |
| २ | १ | प्राचीन | प्राचीनं |
| २ | २ | विदहानां | विदेहानां |
| २ | २० | पापीयासो | पापीयांसो |
| ३ | १ | यम्म्रे | यमम्रे |
| ३ | २५ | यहु | यदु |
| ४ | १ | गौश्च | गौरश्च |
| ४ | २ | पशूना | पशूनां |
| ४ | ५ | शार्ष्यत | शीर्ष्यत |
| ४ | ७ | द्वाभ्यं | द्वाभ्यां |
| ४ | १६ | यहु | यदु |
| ४ | २८ | होचु | होचुः |
| ५ | २ | तत | ततः |
| ५ | १४ | ऽयङ्गले | ऽयङ्गुले |
| ६ | ८ | देवाना | देवानां |
| ६ | १० | दित | दिति |
| ६ | १३ | वाक | वाक् |
| ७ | ३ | कृतानुकर | कृतानुकरा |
| ७ | २१ | सर्वस्म | सर्वस्मा |
| ८ | ३ | देबानां | देवानां |
| ८ | ३ | स्मैब | स्मैव |
| ८ | ६ | नेबै | नेवै |
| ८ | ६ | देव | देवा |
| ८ | १० | मन्त्रस्वेति | मन्त्रयस्वेति |
| ८ | १४ | अस्ये | अस्यै |
| ८ | १४ | ओबधीः | ओषधीः |
| ८ | १५ | वेत | वेद |
| ८ | २६ | मेवैत | मेवैतं |
| ९ | ५ | ब्रूयत् | ब्रूयात् |
| ९ | ११ | विद्यादू | विद्याद् |
| ९ | १६ | मनुष्य | मनुष्यै |
| १० | ६ | विश्वस्वपतम इव | विश्वरूपतम इव |
| १० | १५ | सर्वममाद्यं | सर्वमन्नाद्यं |
| १० | १६ | यदपात | यदपात् |
| १० | १८ | शत्रुवर्द्धस्व | शत्रूर्वर्द्धस्व |
| १० | १६ | तस्मादु | तस्माद् |
| १० | २१ | अपराह्वे | अपराह्णे |
| १० | २६ | एतद्भवत् | एतदभवत् |

| पृष्ठम् | पंक्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ११ | २ | तह्यन्नाद | तर्ह्यन्नाद |
| ११ | १० | तस्मदा | तस्मादा |
| ११ | २३ | तेनैर्ता | तेनैतां |
| १३ | ८ | लुब्धक | लुब्धक |
| १४ | ५ | कल्पो | कल्प्यो |
| १४ | ६ | औघौ | औघौं |
| १५ | ३ | मुष्करपर्ण | पुष्करपर्ण |
| १५ | १५ | पद्यववह | पद्यावबर्ह |
| १५ | १७ | चित्रायैः | चित्रायै |
| १६ | २३ | माषेस । | मीषे । स |
| १६ | २४ | हुविंता | हुतिंवा |
| १७ | २० | तमा | तस्मा |
| १८ | ११ | शन | शनं |

॥ इति ॥